॥ इति श्रीमद्ध्यायमुक्तावलिः स० ॥

मतांगत्यादि ॥ अंतेतु पुण्यकृतामपुण्यकृतामुभयेषाममपीतिफलं ॥ पूर्वपक्षस्तु ॥ पुण्यकृतामेवगमनादिदुःखं नत्वपुण्यकृतां तेषांप्रत्यवायभयवत्वात् ॥ बिभ्यत्पतति पादपादितिन्यायेन भयवतएवपतनवत्वादिदुःखित्वोपलंभात्फलकामनावत्वाच्च ॥ काम्यपुण्यकृतामेवगमनादि कामान्यःकामयतेमन्यमानः सकामभिर्जायतेतत्रतत्रे तिश्रुतौ कामिनएवपुनरागमनोक्तेः ॥ अनिष्टादिकृतांचभयाभावाच्च नपुनरागत्या दिदुःखं ॥ तच्चभयादिमत्वंपतनादिदुःखाप्रयोजकं किंतुकर्मैवेतिवाच्यं कल्पकाभा वात् ॥ किंचपुण्यकृतामेव पुण्यमकुर्वतांपापंचकुर्वतां तात्कालिककामोपरोधादिरूपक्ले शाभावेन स्रक्चंदनवनितादिभोगाधिक्येनच भाविपुनरागमनादिमात्रक्लेशस्याकिं चित्करत्वान्नकार्यंतत्रवैराग्यादीति ॥ सिद्धांतस्तु ॥ तद्यइहशुभकृतोयेचाशुभकृतस्ते

शुभमनुभूयावर्तंतइतिश्रुतौ पुण्यकृतामिवाप्यन्येषांमप्यागतेरुक्तत्वात् ॥ तथासर्वे
वाएतेऽशुभकृतः संयमनेप्रपतंतीतिभाष्योक्तश्रुतौ गच्छंतिपापिनइत्यादिस्मृतिषुच
पुण्यकृदन्येषां नित्यनरकादिमहानर्थस्यचोक्तेश्च भगवद्ज्ञानांसर्वेषामप्यस्त्येवागम
नादिदुःखं भयवत्त्वाभावादिहेतुद्वयंचाप्रयोजकं ॥ अबिभ्यताफलकामनाशून्येनापि
उपभुक्तविषयस्यतन्मृतिहेतुतादृष्टेः कार्यंतत्रातिशयवैराग्यमिति ॥ ११ ॥ ॐ
अपिसप्त ॐ ॥ पूर्वत्रहरिद्वेषिणोनित्यनरकोक्तिरयुक्ता यावदिंद्राश्चतुर्दशेतितद
नित्यत्वोक्तेरित्याक्षेपात्संगतिः ॥ अथपदोक्तंभगवद्द्वेषादावतिशयितवैराग्यमनाव
श्यकमुतावश्यकमितिचिंता ॥ तदर्थंपूर्वंतत्फलत्वेनोक्तोनरकः किंपुनरावृत्तिमानुत
नेति ॥ तदर्थंनरकः किमेकप[illegible]ानेकइति ॥ पूर्वपक्षस्तु ॥ नरकभेदेमानाभावादे

कस्य यावदिंद्राश्चतुर्दशेत्यादावनित्यत्वोक्तेः पुनरावृत्तिमानेवभगवद्द्वेषिनरकः ॥ नचमहातमसिमग्नानां नतेषामुत्थितिःक्वचिदितिस्मृत्या नित्यत्वस्याप्यवगमेन पुरुषभेदेनैकस्यैवनरकस्य नित्यत्वमनित्यत्वंचास्त्वितिवाच्यं ॥ चकारनरकंशून्यमित्यादेर्विरोधादतोनभगवद्द्वेषेऽतिशयेनवैराग्यमावश्यकमिति ॥ सिद्धांतस्तु ॥ रौरवोथमहांश्चैवेतिभाष्योक्तस्मृतावनित्यनरकपंचकस्य नित्यनरकद्वयस्यच प्राधान्येनोक्तयावदिंद्राश्चतुर्दशेत्यादेरनित्यनरकविषयत्वोपपत्तेः ॥ भगवद्द्वेषि नरकः पुनरावृत्तिशून्यएवेतिभाव्यं तत्रातिशयितवैराग्येणेति ॥ १२ ॥ ॐ तत्रापिचतद्व्यापारादविरोधः ॐ ॥ अस्त्वनिष्टादिकारिणोद्विविधाधिकारिणोर्नित्यानित्यनरकभोगः तावतानतद्वेतौवैराग्यमावश्यकं ॥ तस्यदुःखस्वरूपत्वाभावादितिशंकनात्संगतिः ॥ अथपदो

रूपपापादौवैराग्यं नकार्यमुतकार्यमितिर्चिंता ॥ तदर्थं तत्फलरूपोनरकः किमदुःख
रूपोथदुःखरूपइति ॥ तदर्थंनरकस्यसदुःखत्वेतत्प्रेरकेश्वरस्यसभोगः प्रसज्यतउत
नेति ॥ तदर्थं किंभोगोनामदुःखसाक्षात्कारमात्रमुततत्कृतनीचत्वादिरेवेति ॥ पूर्वं
पक्षस्तु ॥ दुःखापरोक्षस्यैवतद्भोगरूपत्वान्नरकिणोदुःखित्वे तत्प्रेरकस्य सर्वज्ञेश्वरस्य
दुःखसाक्षित्वरूपदुःखभोगप्रसंगात् नरकोनदुःखरूपः ॥ नचेश्वरोनतत्रप्रेरकः सर्वंप्रेरय
तीतिभाष्योक्तश्रुतिविरोधाददतोनतत्रवैराग्यं कार्यमिति ॥ सिद्धांतस्तु ॥ नीचोच्च
तैवदुःखादेर्भोग इत्यभिधीयत इतिस्मृत्या नीचत्वादेरेवभोगशब्दार्थत्वात्तस्यैवचदुः
खिप्रेरकत्वेऽपि निर्विकारेऽचिंत्यशक्तौहरावभावस्य नासौदुःखभुगिति श्रुतिस्मृति
सिद्धत्वेन नरकिणां दुःखित्वेबाधकाभावात् ॥ सदुःखोनरकइतिभाव्यं तत्रैववैराग्ये

णेति ॥ १३ ॥ ॐ विद्याकर्मणोरितितुप्रकृतत्वात् ॐ ॥ वैराग्यार्थंनरकादेः सदुःखो
क्तिरयुक्तातेनाविनापितत्फले गत्यादौजीवानांस्वातंत्र्येणेच्छया तत्फलगत्यादित्यागो
पादानसंभवादितिशंकनात्संगतिः ॥ अथपदोक्तंकाम्यकर्मणिवैराग्यं नावश्यकमुता
वश्यकमितिचिंता ॥ तदर्थं जीवानांगत्यादौ स्वातंत्र्यमस्तिउतनेति ॥ तदर्थं अथै
तयोःपथोर्नैकतरेणच गच्छंति तानीमानिक्षुद्रामिश्राणीतिश्रुतावेतयोरिति किंदेवयान
पितृयानरूपमार्गपरामर्शः ॥ उतविद्याकर्मणोरिति ॥ पूर्वपक्षस्तु ॥ छांदोग्येपंचमे
तेर्चिषमभिसंभवंति तेधूममभिसंविशंतीतिपूर्वप्रकृतोदेवयानादिमार्गोवैतयोरित्युत्तर
वाक्येपरामृश्यनैकतरेणगच्छंतीत्युक्त्या भूतानांगतौ भूतस्वातंत्र्यमवगम्यते ॥ पुरुष
१८ प्रयत्नागोचरेनगच्छंतीत्युक्तयोगादितरव्यपदेशादित्यादौ जीवस्वातंत्र्योक्तावपीशा

धीन स्वातंत्र्यंसंभवत्येवाकर्तेतिनयन्यायेनसाधने स्वातंत्र्येफलेपितत्स्यादेवाविशेषा
ज्जीवानां स्वातंत्र्येसर्वेषामपिगतिप्राप्तिरितितुस्वातंत्र्येपिसमं ॥ अदृष्टादिनातिप्रसं
गादिवारणमिहापिसमं ॥ तथाचगतावेवस्वातंत्र्यान्मूलेलब्धे फलेनैवशाखाग्रंगंतु
मिछतीतिन्यायेन फलएवस्वातंत्र्यात्किंकाम्यकर्मादिवैराग्येणेति ॥ सिद्धांतस्तु ॥
तद्यइत्थंविदुर्येचेमेरण्येश्रद्धातपउपासतेतेर्चिषमभिसंभवंतिअथयइमेग्रामाइष्टापूर्तेदत्त
मित्युपासतेतेधूमाभितिविद्याकर्मणोरपि पूर्वत्रप्रकृतत्वाद्देवयानादिमार्गयोस्तत्साधन
विद्याकर्मणोश्च प्रकृतत्वाविशेषेपि विद्यापथःकर्मपथोद्वौपंथानौप्रकीर्तितौ ॥ तद्वर्जित
स्त्रिधायातितिर्यग्वानरकंतम इतिभाष्योक्तसमाख्यय विद्याकर्मणोरेवैतयोरित्युत्तर
वाक्ये परामर्शेसाधनएवजीवानां स्वातंत्र्येणफलेभेदाभावात् साधनेविधिसत्वभावे

नविद्यादिशास्त्रावैय्यर्थ्यायैव तत्रेश्वरःस्वातंत्र्यंददातित्यभ्युपगमेन फलेपिस्वातंत्र्या
पादनाप्रसक्तेरावश्यकमेवकाम्येवैराग्यादीति ॥ १४ ॥ ॐ नतृतीयेतथोपलब्धेः ॐ ॥
अत्रतिर्यग्वानरकंतम इतिपूर्वोक्ततमःस्वरूपचिंतनात्संगतिः ॥ अथपदोक्तंभगवद्वेषि
फले तमस्यातिशयेनवैराग्यं नकार्यमुतकार्यमितिचिंता ॥ तदर्थं तमःकिमितरनरकवत्
सुखदुःखमिश्रमुतदुःखैकस्वरूपमिति ॥ तदर्थं किं दुःखंसुखाविनाभूतमुतनेति ॥ तदर्थं
यत्रदुःखंसुखंतत्रेतिव्याप्तिग्राहकमानस्य तमस्यपवादकंप्रमाणंनास्त्युतास्तीति ॥ पूर्व
पक्षस्तु ॥ यत्रदुःखंसुखंतत्रेतिव्याप्तेः सार्वत्रिकसुखदुःखयोरतींद्रियत्वेना प्रत्यक्षत्वेपि
यत्रदुःखंसुखंतत्रेतिभाष्योक्तस्मृत्याग्रहणसंभवेन दुःखयुक्तेतमसिइतरनरकइवसुखस्या
प्यनुमान सिद्धत्वादपवादकमानस्यचादर्शनात् अन्यनरकापेक्षयानातिशयेन तमसि

वैराग्यंविधेयमिति ॥ सिद्धांतस्तु ॥ श्रुतिस्मृतिप्रत्यक्षानुमानार्थापत्तिभ्यस्तमसोदुःखैक
युक्तत्वावगमात् यत्रदुःखमितिस्मृतेःतमोन्यनरकविषयत्वावश्यंभावाद्भाव्यं तत्रातिश
यितवैराग्येणेति ॥ तथाहि नतमःसुखानुवृत्तं केवलंह्येवात्रदुःखमितिश्रुतिः ॥ नांधेतम
सिमग्नानां सुखलेशोपिकश्चनेतिस्मृतिः ॥ नारायणप्रसादेनेत्यादिभाष्योक्तस्मृतिसिद्धं
चतुर्मुखप्रत्यक्षं अतिप्रियेयथाराजेत्यादिस्मृतिसिद्धतया प्रबलं विप्रतिपन्नाः नदुःख
वंतः तथात्वेनेश्वरानिष्टत्वात् यद्यथेश्वरानिष्टं तत्तथानभवतियथाशशोविषाणित्वेनेत्य
नुमानंच नचासिद्धिः ॥ नैतेदुःखित्वेनईश्वरेष्टाःअप्रियत्वात् योयस्याप्रियः ससुखित्वेन
तस्यानिष्टःयथाराजविरोधिराज्ञइत्यनुमानेन तत्सिद्धेः ॥ अप्रियत्वंचद्वेषित्वादेवसिद्धं
तथा महातमस्त्रिधाप्रोक्तमित्यादिस्मृत्या तमसःस्वरूपश्रवणे श्रोतॄणांश्रवणजदुःखा

धिक्यजन्यमूर्च्छाप्राप्त्यवगमेन तदन्यथानुपपत्तिरूपार्थापत्तिश्चेति ॥ १५ ॥ ॐ तत्
स्वाभाव्यापत्तिरुपपत्तेः ॐ ॥ अस्त्वेवदुःखहेतावनिष्टादौतत्फलेच वैराग्यंनतुकाम्यक
र्माणि तत्फलेचसुखहेतुत्वात्सुखरूपत्वाच्चेतिशंकनात्संगतिः ॥ अथपदोक्तंकाम्यकर्मा
दौवैराग्यंनयुक्तमुतयुक्तमितिचिंता ॥ तदर्थं कर्म महासुखहेतुरुतनेति ॥ तदर्थं कर्म
णःस्वर्गादिगतौधूमोभूत्वाभ्रंभवतीत्यादिनाश्रुतोधूमादिभावः किं धूमादिदेवतैक्यत
त्पदप्राप्त्यन्यतररूपः उतसादृश्यादिरूपइति ॥ तदर्थं धूमोभवतीत्यादिसामानाधि
करण्यं किमुख्यमुतसादृश्यादिनागौणमिति ॥ तदर्थंबाधकंनास्त्युतास्तीति ॥
पूर्वपक्षस्तु ॥ देवतैक्यपदप्राप्त्योरन्यतरएवधूमादिभावः ॥ सामानाधिकरण्यश्रुते
र्मुख्यार्थत्यागेबाधकाभावात् ॥ देवताभिःस्नेहादिवशेन ताभिरेवविद्याप्राप्यस्यापि

स्वपदस्यदातुमपिशक्यत्वेन कर्मिणस्तत्पदप्राप्तेरसंभावितत्वाभावाच्च सुखहेतुत्वा
न्नकर्मणिवैराग्यमिति ॥ सिद्धांतस्तु ॥ लोकेन्यस्याभावाद्दृष्ट्याप्यत्यंतभिन्नस्यकर्मि
णोदेवतैक्यस्यायोगात्तत्पदस्य च नियताधिकारिभिर्विद्ययैवगम्यतयायुगपदनेक
कर्मिसमवायेऽनेकेषामेकपदप्राप्त्यनुपपत्याचासंभवात्सामानाधिरण्यश्रुतेर्मुख्यार्थ
त्यागावश्यंभावेनधूमादिभावप्राप्तिश्चतद्वतौगतिरेवात्वित्यादिस्मृत्युक्तदिशा वतासाद्द
श्यपरावातत्प्रवेशेन स्थानैक्यपरावानेत्ति ॥ महासुखहेतुत्वाद्युक्तंकाम्यकर्माणि तत्फ
लेचवैराग्यमिति ॥ १६ ॥ ॐ नातिचिरेणविशेषात् ॐ ॥ पूर्वत्रागतौकर्मिणोधू
मादिभावश्चितितोत्रत्वागतिरेवकियत्कालेनेति चिंतनाद्वाकर्मिणोदेवतास्वाभाव्या
पत्तावपि तस्याश्चिरकालीनत्वेनापि महासुखवत्वान्नकर्मणिवैराग्यमितिशंकनात्सं

गतिः ॥ अत्राथपदोक्तंकाम्यकर्माणि वैराग्यंनयुक्तमुतयुक्तमितिचिंता ॥ तदर्थंतार्कि
महासुखहेतुरुतनेति ॥ तदर्थंकर्मिणोधूमादिदेवतास्वाभाव्येन स्वर्गादागमनं चिर
कालीनमुतनेति ॥ तदर्थं मागमनेकालक्लृप्तिर्नास्त्युतास्तीति ॥ पूर्वपक्षस्तु ॥
आगमनेएतावतिकालएवागंतव्यमिति कालक्लृप्त्यभावेन यथेतमाकाशमित्यादिना
गतौ इहस्थानप्राप्तिश्रवणेनच तत्तद्देवतास्वाभाव्येन प्राप्तातिमहासुखत्यागेन शीघ्र
मागमनेहेत्वभावाच्च कल्पांतमेवमध्येमार्गमवस्थाने प्राप्तसुखहेतौनकर्मणिवैराग्यं
युक्तमिति ॥ सिद्धांतस्तु ॥ तद्यइहरमणीयचरणाअभ्याशोहयत्तेरमणीयांयोनिमापद्यंत
इत्यादिश्रुतौ स्वर्गाल्लोकादवाप्नोतिवत्सरात्पूर्वमेवात्विति स्मृतौचागतौकर्मिणः काल
क्लृप्त्यवगमात्क्लृप्तकालाधिकावस्थाने कारणाभावात्तस्येष्टत्वेपि जीवस्यास्वातंत्र्या

न्या० २०६

दन्यथासर्वेषां दुःखाभावप्रसंगाददतिचिरेणैवागमनमितिभाव्यं काम्येकर्मणि वैराग्ये मु.अ. ३।१
णेति ॥ १७ ॥ ॐ अन्याधिष्ठितेपूर्ववदभिलापात् ॐ ॥ पूर्वत्रश्रुत्यादिना कर्मि
णोतिचिरेणगतिरित्युक्तिरयुक्ता तत्रैवानाश्वासादितिशंकनात्संगतिः ॥ अथपदोक्तंवै
राग्यं नकार्यमुतकार्यमितिचिंता तदर्थंनिर्वेदमायादित्यादिवैराग्यविधायकश्रुतावा
श्वासोनयुक्तः उतयुक्तइति तदर्थं वेदःकच्चित्फलव्यभिचारीउतनेति तदर्थंसुखहेतुतया
वेदोक्तकर्मवंतःकिमागतोदुःखवंतोनवेति ॥ तदर्थं तव्रीहियवाइतिश्रुत्युक्तकर्मिणां
व्रीह्यादिभावःकिंमुख्यःउतधूमादिभाववद्गौणइति ॥ गौणत्वेपिकर्मिणोदुःखप्रापकम
स्त्युतनेति ॥ पूर्वपक्षस्तु ॥ नकार्यंवैराग्यं तद्विधायकश्रुतावनाश्वासात् तदनाश्वास १०६
श्चस्वर्गकामोयजेतेत्यादिवत् ॥ एकदेशसुखसाधनतयोक्तेकर्माणि कर्मफलमार्गे व्री

ह्याादिभावावगत्या तच्छब्देन कृच्छादिनाःदुःखप्राप्तिरावश्यकतयाफलवैपरीत्येनाना
श्वासात् ॥ व्रीह्यादिभावस्य धूमादिभाववत्गौणत्वे व्रीह्यादिदुःखिजीवैःसहावस्थानेन
यागादिकर्मणः ॥ पशुहिंसारूपतयापापत्वेन कर्मिणोःदुःखप्रापकसत्वेनच दुःखाव
श्यंभावाच्चेति ॥ सिद्धांतस्तु ॥ कर्मिणःश्रुतव्रीह्यादिभावस्य जीवांतराधिष्ठितव्रीह्या
दिदेहप्रवेशरूपतयापूर्ववद्गौणत्वात् दुःखिजीवेनसहावस्थानेपि कर्मिणोहिंसारूपत्वेपि
वायव्यंश्वेतमालभेतेत्यादिवेदविहितत्वेनापपतया दुःखाप्रापकत्वेनहेत्वभावेनकर्मि
णोदुःखप्राप्तेर्नक्कापिवेदानाश्वासइतिभाव्यं वैराग्येणेति ॥१८॥ ॐ रेतःसिग्योगोथ
ॐ ॥ पूर्वत्रान्याधिष्ठितेव्रीह्यादिदेहइवस्वर्गादागतस्यकार्मिणः पितृदेहेप्रवेशसाध
नात्संगतिः ॥ अथपदोक्तंकर्मादावातिवैराग्यमनपेक्ष्यमुतापेक्ष्यमितिचिंता ॥ तदर्थं

स्वर्गादागतस्यकर्म्मिणः पितृप्रवेशोनास्त्युतास्तीति तदर्थं योवारेतःसिंचतितमेवानुप्र
विशतीतिश्रुतिर्दुर्बलास्वर्गादवागतश्चापि मातुरेवोदरंव्रजेदितिवचनंप्रबलमुतविपरी
तमिति ॥ तदर्थं वचनंसयुक्तिकमुतनेति ॥ तदर्थं कर्म्मिणःपितृप्रवेशप्रयोजनंनास्त्यु
तास्तीति ॥ पूर्वपक्षस्तु ॥ कर्म्मिणःपितृप्रवेशफलाभावाद्रेतसोदेहपरिणामायापेक्षित
त्वेपि शेकानंतरंमातृप्रवेशेपि तदुपपत्तेः मातुरेवोदरंव्रजेदितिवचनात् सयुक्तिकसा
धारणवचनबाधिततया पितृप्रवेशःश्रुतेः दौर्बल्येनपितृप्रवेशाप्रापकत्वान्नास्तिपितृ
प्रवेशइतिनापेक्ष्यमतिवैराग्यामिति ॥ सिद्धांतस्तु ॥ देहक्लृप्त्यर्थमावश्यकतया रेतस
उक्तविधयाअन्यथोपपत्तावपि ईशशक्त्यैवपितरंप्रविष्टोयाति मातरमितिईशक्लृप्तिवच
नेनरेतःसिचमेवानुप्रविशतीतिश्रुत्याच पितृप्रवेशसिद्धेर्मातुरेवेत्येवकारस्यायोगव्यवछे ०७

दकत्वेनोपपत्यासयुक्तिकत्वाभावेनच पितृप्रवेशाप्रतिषेधकत्वादस्तिपितृप्रवेशइति
भाव्यं कर्मादावतिवैराग्येणेति ॥ १९ ॥ ॐ योनेःशरीरं ॐ ॥ पूर्वसूत्रेअथपदोक्तापि
तृद्वारामातृप्राप्तिरेवात्रसाध्यतइतिसंगतिः ॥ अथपदोक्तकर्मादावतिवैराग्यस्मनावश्यक
मुतावश्यकमितिचिंता ॥ तदर्थं कर्मिणोदेहप्राप्तावायासोनास्त्युतास्तीति ॥ तदर्थं
पितृदेहाद्योनिद्वारामातृद्वारंप्राप्य स्वदेहंनाप्नोतिउततथैवाप्नोति तदर्थंमुक्तक्रमाद
न्यथापिजन्मसंभवत्युतनेति ॥ पूर्वपक्षस्तु ॥ उक्तक्रमादन्यथापिकर्मिणोजन्मसंभ
वति ॥ तथाहि ॥ पितुःसकाशादेवतस्मिन्बहिरेववामांधातृद्रोणादेरिवजन्मसंभवेन
मातुरुदरप्राप्ते रनावश्यकत्वात्तदावश्यकत्वेवा देहंगर्भेस्थितंक्वापिप्रविशेत्स्वर्गतागत
इत्युक्तेः ॥ आस्तिकादेरिवसंस्पर्शद्वारा पितुःसकाशान्मातुरुदरप्रवेशसंभवेन योनि

प्राप्तेरनावश्यकत्वात् ॥ देहगर्भस्थितमितिवचनान्मातृुपभुज्यमानान्नादि मातृुदरप्र
वेशसंभवान्मातृदेहस्थरेतसैव देहपरिणतिसंभवाच्च पितृप्रवेशस्यापिव्यर्थत्वात् अतो
जन्मप्राप्तावस्यायासाभावान्नातिवैराग्येणकृत्यमिति ॥ सिद्धांतस्तु ॥ पितृप्रवेशपूर्वं
योनिद्वारा मातृुदरप्रवेशेनैव कर्मिणोजन्मनान्यथादिवस्थास्तुंगच्छतिस्थास्नुभ्यः
पितरंपितुर्मातुः शरीरंशरीरेणजायतेइत्यादिश्रुतेः ॥ देहगर्भस्थितमित्यादेर्योगाराधि
तभगवत्प्रसादलब्धसामर्थ्यातिशयवतां महात्मनां जन्मविषयमितिकर्मिणोदेहप्रा
प्तावायाससद्भावाद्भाव्यंकर्मादावतिवैराग्येणेति ॥ २० ॥ इतिश्रीराघवेंद्रयतिकृतायां
न्यायमुक्तावल्यां तृतीयाध्यायस्यप्रथमःपादः ॥ श्रीकृष्णार्पणमस्तु ॥ ॥



॥ भक्तिपादप्रतिपाद्यश्रीहरयेनमः ॥ हरिः ॐ ॥ यद्वादयर्थंवैराग्यमुक्तंपूर्वपादे
याचवक्ष्यमाणोपासनांगंतादृशभक्त्यर्थमत्रपादे भगवन्महिमोच्यतइतिपूर्वोत्तरपाद
संगतिः ॥ एतत्पादार्थश्चभाष्यादितोव्यक्तः ॥ ॐ संध्येसृष्टिराहहि ॐ ॥ पूर्वत्रयोनेः
शरीरमितिजीवानां ब्रह्मावगतावस्थावर्णनस्यावसरप्राप्तत्वात्तत्रावस्थानां मध्येयोनि
मन्येप्रपद्यंतइत्यादिकाठकश्रुतौ योनिप्राप्त्यनंतरंस्वमोक्त्या तदनुरोधेनात्रादौस्वमार्थ
तत्प्रतीतिनियंतृत्वरूपोमहिमाहरेर्निरूप्यते ॥ अत्रजिज्ञासासूत्रस्थाथशब्दोक्ताधिका
रिविशेषणीभूताहरिभक्तिर्नकार्योतकार्येतिचिंता ॥ तदर्थं स्वप्नार्थःकिमीशाधीनउत
तदनधीनइति ॥ तदर्थं किमसत्यउतसत्यइति ॥ तदर्थं किंसत्यत्वेसाधकंनास्तिबाधकं
चास्तिउतविपरीतमिति ॥ पूर्वपक्षस्तु ॥ नेशाधीनःस्वमार्थःतस्यासत्वात् ॥ असतोपिश

शविषाणादेरसत्यत्वेनेशाधीनत्वस्यएतेनसर्वेंव्याख्याताइत्यत्रोक्तावपिघटादितौल्येन
योगक्षेमादिरूपतदधीनत्वस्यासतोनुपपत्तेः ॥ नचासिद्धोहेतुः ॥ सत्यत्वेसाधकाभावा
द्बाधकबाहुल्याच्च ॥ स्वप्नार्थानांसत्यत्वेनित्यत्वमनित्यंवावाच्यं ॥ उभयथापिप्रागूर्ध्वमुप
लंभप्रसंगात् ॥ तदैवोत्पत्तिविनाशवत्त्वंतु प्रमाणाभावादयुक्तं ॥ कर्त्रुपादाननिमित्ताना
मभावाच्च ॥ बाह्योपादानादिकारणकत्वे कपालाद्युपलंभापाताच्च ॥ तदजन्यत्वेचशु
क्तिरूप्यवदसत्वस्यदुर्वारत्वाच्च ॥ असंतएवगजादयः स्वप्नेदृष्टाइतिबाधबोधयोगाच्च ॥
एवंबाधकांतराणि टीकोक्तानिज्ञेयानि ॥ सिद्धांतस्तु ॥ यदाकर्मसुकाम्येषुस्त्रियमित्या
दिश्रुतिस्मृतितः स्वप्नार्थानांशुभादिसूचकत्वप्रमाणेनशाकुनवत्सत्यत्वात् ॥ नत
त्ररथाइत्यादिश्रुत्याप्रागसतामेवार्थानां स्वप्नएवदृष्टेः ॥ सृष्टेश्चोक्त्या तदैवोत्पत्तिनि १०९

रोधयोःसंभवेन प्रागूर्ध्वमुपलंभाप्रसंगात् ॥ यएषुसुप्तेष्विविति श्रुतावेतस्माद्ध्येवपुत्रोजा
यतइतिश्रुतौचस्वप्नार्थानामीशकर्तृत्वस्योक्त्या कर्त्रभावचोद्यस्य तथाबाह्यार्थघटादि
वत् स्फुटमनभिव्यक्तत्वयुक्त्या मनोगतांस्तुसंस्कारानितिस्मृत्याच बाह्योपादाना
भिधात्र्यामानसवासनोपादानकत्वचोद्यस्य कपालाद्युपलंभप्रसंगइत्यादिचोद्यस्या
नवकाशात् ॥ स्वप्नानांजाग्रत्पदार्थत्वस्यासत्वेन बाधोपपत्तेश्चसाधकसद्भावाच्च स्व
प्नार्थाःसत्याएवेतिस्वप्नार्थास्ताद्धियः तत्तिरोधानंचेतिसर्वमीशाधीनमिति ॥ फलेतु
पूर्वाध्यायोक्तसर्वनियंतृत्वरूपमाहिमाक्षेपादिद्वारा भक्त्याक्षेपसमाधी ॥ सूत्रक्रमस्तु ॥
बाधकनिरासएवसाधकंसुस्वस्थंभवतीतित्रिसूत्र्या बाधकानिनिरस्यांतेसाधकोक्तिः
अतएवदोषपरिहाराय सूत्रमितिटीकातत्रापिसृष्टौसिद्धायांकर्त्रादिकारकवता तत्रा

पिकर्तुःप्राधान्यमित्यादिरूह्यः ॥ १ ॥ ॐ पराभिध्यानात्तुतिरोहितंततोह्यस्यबंधवि
पर्ययौ ॐ ॥ अस्तुस्वाप्नपदार्थानामुक्तदिशाईशायत्तत्वं नतुतद्धीतात्तिरोधानयोः तयो
र्बाह्यार्थाज्ञानज्ञानाभ्यामेवसिद्धेरितिशंकनात्संगतिः ॥ अथत्रापदोक्ताभक्तिर्नकार्या
उतकार्येतिचिंता ॥ तदर्थं प्रकृतौस्वाप्नाविर्भावतिरोभावौ किमीशाधीनावुततदन
धीनाविति ॥ तदर्थं बाह्यार्थाज्ञानज्ञानेर्किंस्वप्नधीतिरोधानयोः स्वतंत्रेहेतुरुतनिमि
त्तमात्रमिति ॥ पूर्वपक्षस्तु ॥ स्वाप्नाविर्भावतिरोधानयोः बाह्यार्थाज्ञानज्ञानाधीनानु
भवेन तदाविर्भावतिरोधानयोः बाह्यार्थज्ञानाज्ञानाभ्यामेवोपपत्तौ ईश्वरेणकृत्याभा
वात् ॥ नहिबाह्यार्थज्ञानाज्ञानयोः स्वनिबंधनस्वाप्नार्थधीतन्निवृत्त्योरन्यापेक्षास्तीति
॥ सिद्धांतस्तु ॥ यथाबंधमोक्षयोरीशाज्ञानाज्ञानानिबंधनत्वप्रसिद्धावपि तयोर्जडत्वेना ११

स्वंतत्रतयाबंधकोभवपाशेनभवपाशाच्चमोचक इत्यादिवचनेनेशाधीनावेवबंधमोक्षौ
॥ तथाबाह्यार्थज्ञानाज्ञाननिमित्तकतया प्रतीयमानावपिस्वाप्नाविर्भावतिरोभावावी
शाधीनावेव ॥ ज्ञानाज्ञानयोरस्वातंत्र्यात् ॥ तेतुनिमित्तमात्रं ॥ स्वप्नादिबुद्धिकर्ता
चतिरस्कर्तासएवचेत्यादेरिति ॥ टीकायांतुसूत्रेबंधविपर्ययाविति द्विवचनस्य स्वप्नादिबु
द्धिकर्तेतिस्मृत्युक्तेश्च स्वारस्यानुरोधनाविर्भावस्याज्ञानाधीनत्वनिरासकाधिकरणांत
रस्याभावेन तिरोधानस्याज्ञानाधीनत्वनिरासकन्यायसमानविषयत्वादाद्यसूत्रादौति
रोहितमित्यस्योपलक्षणतया सिद्धांते स्वाप्नाविर्भावतिरोभावयोःसाम्येन द्वंद्वेननिर्दे
शाद्यथाश्रुतंसूत्रानुरोधेन तिरोधानमात्रप्राधान्येन पूर्वपक्षोक्तावपिद्वयोःसाम्येनैवपूर्व
पक्षोभिमतइत्यविरोधः ॥ २ ॥ ॐ देहयोगाद्वासोपि ॐ ॥ षष्ठकाण्वश्रुतौ ज्योतिर्ब्रा

ह्मणे सवाएषएतस्मिन्रत्वाचरित्वेत्यादिना स्वप्नोत्त्यनंतरंजाग्रद्वृत्त्या स्वप्नाविभावो दिचिंतानंतरमत्रजाग्रच्चिंतनात्संगतिः ॥ अत्राजाग्रदर्थानांस्वप्नार्थवन्नमिथ्यात्वं बहु जनविवादाभावात् ॥ बाधकाभावादल्पजनविवादस्य नाभावउपलब्धेर्वैधर्म्याच्चनस्व प्नादिवदित्यत्रनिरासादत्रभगवदधीनतामात्रं चिंत्यते ॥ देहाभिमानादिनावस्थितिरूप जाग्रदवस्थाअहरादिकालाधीनेतिप्राप्ते पूर्ववदेवकालस्यास्वातंत्र्यादीशाधीनैवेति सिद्धांतः ॥ विशेषशंकातुकालास्वातंत्र्यबुद्धेर्बाधिकाभावेनभ्रमत्वायोगात् ननि मित्तमात्रपरत्वमिति परिहारस्तुसएवजागरितास्थापयतीत्यादि श्रुतिबलान्निमित्त मात्रपरत्वमिति ॥ फलंतुपूर्ववत् ॥ ३ ॥ ॐ तदभावोनाडीषुतच्छ्रुतेरात्मनिह ॐ ॥ पूर्वत्रस्वप्नजागरणयोः कालादेरस्वातंत्र्येणेश्वराधीनत्वोभ्दावकसृष्टिश्रुतेरपिपूर्वन्या





येनेशाधीनत्वसिद्धावत्रेशस्य सुप्तजीवप्राप्यत्वलाभाय सुप्तिस्वरूपमेवनिरूप्यते ॥ अत्रजीवस्यसुप्तिर्नाडीपरमात्मनोरन्यतरत्रोभयत्रेतिचिंता ॥ तदर्थं सतासोम्यतदा संपन्नइतितदानाडीषु सुप्तोभवतीतिचश्रुतिद्वयमुभयत्र सुप्तिव्यवस्थापकं नभव त्यथभवतीति ॥ तदर्थं मुभयत्रसुप्तिर्विरुद्धोतनेति ॥ तदर्थं तत्त्वकिंपरमात्मन्युत नाड्यामिति तदर्थं नाड्यांसुप्तावौत्तरिकानुस्मृतिर्नयुक्तोतयुक्तेति ॥ तदर्थं साकिंसौ षुप्तिकसुखाद्यनुभवःजन्यस्मृतिरूपउतदुःखाभावानुमितिरूपेति ॥ यद्याद्यःपक्षस्तदा सुखानुस्मृतिसिद्धसौषुप्तिकसुखैकानुभवस्य ईशादन्यत्रस्थितौ स्वप्नादिविवादायोगा त्परमात्मनीतिफलं ॥ यद्यंतस्तदासुप्तौसुखानुभवस्यैवाभावेन नाड्यामेवेतिफलं ॥ पूर्वपक्षस्तु ॥ उभयत्रसुप्तेर्विरुद्धत्वेन श्रुतिद्वयस्योभयत्रसुप्तिव्यवस्थापकत्वाभावाद

न्यतरञ्चेत्यवश्यंवाच्यं ॥ सुप्तिकालस्याज्ञानेनपक्षीकरणायोगादनुमानानुदयेनैतावंतं
कालमहंसुखमस्वाप्सामित्यस्यस्मृतित्वेन तत्सिद्धसुखैकानुभवस्यभगवतान्यत्रावस्था
नेजाग्रदादिविवादायोगात्परमात्मन्येवेति सतासौम्यतदासंपन्नोभवतितीश्रुतेश्च॥ नच
नाडीषुसुप्तोभवतीतिश्रुतिविरोधः प्राचीनश्रुतेःसयुक्तिकत्वेन प्राबल्यादिति ॥ सिद्धां
तस्तु ॥ नित्यनिर्दोषतया प्रमाणभूतयोरुक्तश्रुत्या साक्षादसाक्षात्वाभ्यां नाडीस्थपर
मात्मनीतिव्यवस्थयाविरोधाभावे संभवत्याप्रामाण्यायोगात्सुखैकानुभवस्यचोपपत्तेः
नाडीस्थपरमात्मन्येवेति ॥ फलेतु सुप्तिव्यवस्थाद्वारा भक्त्यादिसाधनवशात्वनास्था
निरासमुखेनभक्त्याक्षेपसमाधी ॥ टीकायांत्वन्यत्रेतिपक्षंसिद्धवत्कृत्यपरमात्मानिनाडी
ष्वेत्येतत्संदिह्यावाद्यंतरपक्षनिरासाय नाड्यामेवेतिपक्षंव्युदस्यपरमात्मन्येवेति पूर्वप

क्षव्याजेन स्थापयित्वोभयत्रेत्येवंसिद्धांतितं ॥ ४ ॥ ॐ अतःप्रबोधोस्मात् ॐ ॥ अत्र
प्रागुक्तसुप्तप्राप्यत्वहेतुनैवासिद्धांतकरणात्संगतिः ॥ प्रकृतसुप्तप्रबोधः किंकचित्भेरीता
डनादिहेत्वंतराधीनः उतसर्वत्रेशैकाधीनइतिर्चिंता ॥ क्वचित्भेरीताडनादिहेत्वंतर
दृष्टेः निमितमात्रकल्पकंनास्त्युतास्तीति ॥ पूर्वपक्षस्तु ॥ क्वचिद्भेरीताडनादिकरकां
तराणामप्युपलंभात्तत्रापीश्वरकल्पनेमानाभावेन कारणांतराभावस्थलेप्रबोधस्येशा
धीनत्वेपिनकारणांतरसद्भावस्थलेतत्रतेषामेवस्वांतत्र्योपपत्तौ निमित्तमात्रत्वकल्पने
हेत्वभावादिति ॥ सिद्धांतस्तु ॥ एषएवसुप्तप्रबोधयतीतिसावधारणश्रुतिविरोधेन
हेत्वंतरणां निमितमात्रत्वात्सुप्तप्रबोधकोपीश्वरएव नतुकारणांतरस्वातंत्र्यमिति ॥
फलेत्वथपदोक्तभक्त्याक्षेपसमाधीएवेति ॥ ५ ॥ ॐ सएवचकर्मानुस्मृतिशब्दवि

धिभ्यः ॐ ॥ पूर्वत्रसामान्यतःस्वप्नाद्यवस्थाईशाधीनाइत्युक्तं ॥ अत्रतुसर्वजनीनाः सर्वकालीनाअपि तदधीनाइतिचिंत्यतइतिसंगतिः ॥ स्वप्नाद्यवस्थाप्रेरकत्वप्रकृतोविष्णुः किंकेषांचित्कादाचित्कावस्थाप्रेरकः उत्तसर्वजीवानांसर्वकालीनावस्थाप्रेरकइतिचिंता ॥ तदर्थं लोकदृष्टिनियामिकाभवत्युतनेति ॥ तदर्थं राजादिलोकदृष्ट्यपवादकंमानं नास्त्युतास्तीति ॥ पूर्वपक्षस्तु ॥ केषांचित्कादाचिदवस्थाप्रेरकोनसर्वजनीन सर्वकालीनावस्थाप्रेरकः लोकेराजादौखंडेशत्वदर्शनात् ॥ नचदृष्टिरप्रयोजिका ॥ तथात्वेप्रत्यक्षसिद्धाज्ञानकालभेरीताडनादिकारणापेक्षापि स्वप्नाद्यवस्थाप्रेरणेनस्यात् ॥ नचान्यभावव्यावृत्तेश्चेत्यादौलोकदृष्टित्यागेनोक्ताणुत्वमहत्वस्त्रीत्वपुंस्त्वादिसहभाववदल्पश्रुतेरित्यत्रोक्तव्योमांशवैलक्षण्यवत् श्रुतेरित्यादौनिरंशस्याप्येक



देशेनप्रवृत्यादिवच्चास्तुलोकदृष्टित्यागेन सर्वप्रेरकत्वमितिवाच्यम् ॥ तत्राणोरणीयान् अस्थूलमनण्वित्यादिएषमआत्मांतर्हृदयेज्यायान् योयासौविरुद्धोविरुद्ध इत्यादिप्रमाणवदिहसर्वावस्थाप्रेरकत्वेमानाभावात् ॥ येनदृष्टित्यागःस्यादिति ॥ सिद्धांतस्तु ॥ विष्णुरेवसर्वत्रसर्वजनीनसार्वकालिकसर्वावस्थाप्रेरकोनतुक्वचिदन्योपिप्रेरकः ॥ एषह्येवसाधुकर्मकारयतीत्यादिभाष्योक्तश्रुतिबलेन नात्मानमेवलोकमुपासीतेत्यादावात्मनएवोपास्यत्वोक्त्यन्यथानुपपत्याचास्यैवसर्वप्रेरकत्वावगमात् ॥ अन्यथान्यस्यापिक्वाचित्प्रेरकत्वेश्रुताववधारणायोगात् नचैवंलोकदृष्टिविरोधः ॥ श्रुत्यादिप्रमाणबलेन लोकेदृष्टस्यापिलौकिकधेन्वादावदृष्टस्यकामधेन्वादाविवोपपत्तेरिति ॥ फलेवृत्तेएव ॥ ६ ॥ ॐ मुग्धेर्धसंपत्तिःपरिशेषात् ॐ ॥ एवंप्रधानवस्थानांचिंतानंतर

ग्रा० मत्रावांतरावस्थाचिंतनात्संगतिः ॥ अत्रस्वनाडयवस्थाचिंताप्रसंगसन्निधापितोमोहः मु.अ.
२४ किंस्वप्नादिव्यवस्थान्यतमांतर्भूतः उततत्तोवस्थांतरमिति ॥ तदर्थसाकिंभगवत्प्राप्तिः ३।२
तदन्यत्रस्थित्योरन्यतररूपउतनाडयामन्यादृशएवेति ॥ तदर्थमन्यादृशत्वेमानंना
स्त्युतास्तीति ॥ यद्याद्यस्तदावस्थांतरमितिचिंतायद्यंत्यःनतदावस्थांतरमितिव्यक्तं ॥
तथान्यतररूपइत्यत्रापिकिंमुक्तभगवत्प्राप्तिरूपः किंवाअन्यत्रस्थितिरूपइतिचिंता ॥
तदर्थं किमयंसुप्तिसधर्मोथस्वप्नः जाग्रत्सधर्मेति ॥ अत्रापिव्यक्तफलफलीभावः अत्र
टीकायामाद्यसंदेहः ॥ सित्धांतोक्तिदिशासुज्ञान इतिप्रधानावस्थांतरंनेतिप्रदर्शनाय
स्वप्नादित्रितयान्यतमत्वंसित्धवत्कृत्य मोहेब्रह्मप्राप्तिरेवपृथगवस्थात्वादिति न्याय
विवरणे जाग्रत्स्वप्नयोःपृथगवस्थादित्यर्थमुपेत्य तदनुगुणत्वेन संदेहपूर्वपक्षौदर्शितौ ॥ ११४

अतएवसिद्धांतेमोहस्यावस्थात्रयातिरिक्तत्वेभवेदेतादित्याद्युक्तामितिज्ञेयं ॥ पूर्वप
क्षस्तु ॥ मोहःस्वप्नादित्र्यवस्थान्यतमांतर्भूतएवनतुततोतिरिक्तः ॥ मानाभावात्
ब्रह्मप्राप्तितदन्यत्रस्थित्योः सुप्ताद्यवस्थात्वेनततोन्यादृशेस्थितेरभावेनातिरिक्तत्वात्सं
भवाच्च ॥ बाह्यार्थाज्ञानसाम्येन सुप्त्याद्यंतर्भावसंभवाच्च ॥ अंतर्भावपक्षेपिनभग
वदन्यत्रस्थितिरूपस्वप्नजाग्रदवस्थांतर्भूतः ॥ तयोःस्वप्नबाह्यगजतुरगाद्यर्थज्ञान
वत्वरूपत्वान्मोहस्यच तदुभयज्ञानशून्यसुप्तिसमानधर्मतया समग्रभगवत्प्राप्तिरूपसु
प्त्यवस्थांतर्भूतएवेति ॥ सित्धांतस्तु ॥ दुःखमात्रप्रतिस्मृतेरितिस्मृत्या दुःखात्मका
लातिरिक्तविषयांतरज्ञानशून्यरूपत्वेनसुखादिज्ञानोपेतसुप्त्याद्यंतर्भावायोगात् ॥ मो
२० हावस्थात्रयातिरिक्तावस्थैव दुःखैकानुभवत्वस्यैवमानत्वात् ॥ नचातिरिक्तत्वासं

भवः ॥ परमात्मनिद्धूरत्वसामीप्यप्रवेशानां तदन्यत्रस्थितितत्प्राप्तिरूपाणां तद्वद यस्थादितिस्मृत्यार्धप्रवेशस्यमोहत्वेनावश्यंवाच्यतयापरिशेषप्रमाणसिद्धत्वादिति ॥ फलेत्ववस्थांतरावस्थितजीवप्राप्यत्वरूपमाहात्म्याभावतद्भावाभ्यां भक्त्याक्षेपस माधी ॥ अत्रमोहःकिंबाह्यकारणाधीनउत ईश्वराधीनइतिसंदेहेबलवदभिघातादि बाह्यकारणाधीनत्वान्नेशाधीन इतिप्राप्तेसएवचेत्यत्रोक्तसिद्धांतन्यायेनेशाधीनएव बाह्यकारणदृष्टिस्तु मूर्च्छाप्रबोधनंचैवततएवप्रवर्ततइतिविशिष्यकौर्मस्मृत्यानिमित्त मात्रविषयेत्यर्थस्य पूर्वन्यायेनैवसिद्धत्वान्नात्रतच्चिंतनं कृतमितिज्ञेयं ॥ ७ ॥ ॐ नस्थानतोपिपरस्योभयलिंगंसर्वत्रहि ॐ ॥ पूर्वत्रसर्वावस्थाप्रवर्तकत्वस्यहरेरुक्ताववि हतत्प्रवर्तकविश्वादिरूपेषुभेदशंकानिरासात्संगतिः ॥ प्रतिशरीरंजाग्रदादिस्थाने



षुस्थितोविश्वादिरूपीभगवान् किमन्योन्यंभेदवानुताभिन्नमितिर्चिंता ॥ तदर्थं किं तस्यभेदसाधकंभिन्नानेकस्थानत्वंकार्यकारणबद्धत्वादिभेदश्रवणंच किंनिरवकाशमु तगौणत्वादिनासावकाशमिति ॥ तदर्थं किंतयोर्गौणत्वादिकल्पकंबलवच्छ्रुत्यादिकं नास्त्युतास्तीति ॥ पूर्वपक्षस्तु ॥ अन्योन्यंभेदवानेव अक्षिकंठादिरूपभिन्नस्थानक त्वाद्घटादिवत् नचभिन्नस्थानकत्वं भेदरूपसाध्येनविनापिव्योमवदित्यत्रोक्तदिशा व्योम्नइववाहेररुपपन्नमितिवाच्यं ॥ व्योम्नोंशतोनेकस्थानत्वसंभवेपिहरेरनेकस्थान स्थितविश्वादिरूपाणांसप्तांगएकोनविंशतिमुखइत्यादिनाप्रत्येकंसमग्ररूपश्रवणेनव्यो मवैषम्येणभेदसाध्येनविनाहेतोरनवकाशात् ॥ किंचकार्यकारणबद्धौताविल्यादिना विश्वादिरूपाणांजाग्रत्स्वप्नसुषुप्तिरूपकार्यबद्धत्वकारणबद्धत्वाबद्धत्वस्थूलभुक्सूक्ष्म

भुत्क्वादिरूपेणभेदव्यपदेशाच्चान्योन्यंभेदवानेवनचायंव्यपदेशोभेदं विनापिहेत्वंतरेणै
वयुक्तः ॥ कल्पकाभावात्धेत्वंतराद्दृष्टेश्चेति ॥ सिधांतस्तु ॥ अन्योन्यंतत्रतत्रास्थिति
रूपैरभिन्नएवभगवान् ॥ सर्वेषुभूतेष्वेतमेवब्रह्मेत्याचक्षते ॥ सर्वेषुभूतेषुचक्षुरादिस्था
नेषुएतमेकमेवपूर्णगुणमाचक्षत इतिएषतआत्मांतर्याम्यमृतइत्ययमेवसः सोयमात्मे
त्यादिभाष्योक्तश्रुतिषुतत्रतत्रास्थितभगवद्रूपाणां परस्परमूलरूपेणचाभेदकथनात् ॥
अमात्रोनंतमात्रश्चेतिश्रुतौचाभिन्नांशशून्यः पुनरनंतांशश्चेतिविश्वाद्यनंतरूपाणामभे
दोक्तेश्च ॥ भेदानुमानस्यभेदप्रातिनिधिविशेषणवाउक्तानेकश्रुतिबाधिततयाअप्रामा
ण्येनैवोपपत्तेः ॥ भेदव्यपदेशस्यचभिन्नोभिन्नेषुसंस्थितेः ॥ ऐश्वर्याद्रूपमेकंचसूर्यवत्
बहुधेयतइत्यादिस्मृत्यागोष्टेगावः एकीभवंतीत्यत्रैक्योक्तिवद्व्याप्तेहरावंगुष्ठमात्रः पुरुष

इत्युक्तिवच्चस्थानभेदेनोपचारेणवैश्वर्य बलेनवापपत्तेस्तदुक्तमन्यत्रश्रुतिबलात्स्थानानां
भेदस्तस्याभेद एवेति ॥ फलेतुभेदप्राप्तावनुग्राह्यानुग्राहकभावाद्यापत्यासएवचेत्यत्रो
क्तैश्वर्यनिरासद्वाराभक्त्याक्षेपसमाधी ॥ ८ ॥ ॐ अरूपवदेवहितत्प्रधानत्वात् ॐ ॥
पूर्वत्रोभयलिंगमितिलिंगपदेनप्रकृतभगवद्गुणामत्राप्राकृतत्वसाधनात्संगतिः ॥ यदर्थं
पूर्वत्रमाहिमोक्तःसाभक्तिर्विष्णौनयुक्ताथयुक्तेतिचिंता॥तदर्थं तत्रमहात्म्यंनयुक्तमुतयु
क्तमिति ॥ तदर्थं रूपवत्वारूपवत्वयोर्दोषोस्त्युतनेति ॥ तथारूपित्वारूपित्वश्रुत्योः
किमेकविषयकत्वमुतभिन्नविषयकत्वमिति ॥ पूर्वपक्षस्तु ॥ भक्तिर्हरौनयुक्ता तस्यरूपि
त्वेरूपत्वेवांगीकृतेदोषापातेनमाहात्म्यायोगात् ॥ रूपित्वेचैत्रवदनित्यत्वप्रसंगात् ॥
श्रुतेरित्यत्रोक्तनित्यदेहत्वस्यापीहाक्षेपात् ॥ अरूपमव्ययमित्यादिश्रुत्यप्रामाण्यापा

ताच्च ॥ अरूपित्वेचसौंदर्यसुलक्षणत्वाद्ययोगात् ॥ रुग्मवर्णमादित्यवर्णमित्यादिश्रु
त्यप्रामाण्यप्रसंगाच्च ॥ नचरूप्यरूपित्वश्रुत्योरप्राकृतप्राकृतविषयत्वेनाविरोधान्नको-
पिदोषइतियुक्तंकल्पकाभावादिति ॥ सिद्धांतस्तु ॥ ऐकात्म्यप्रत्ययसारमानंदमात्र
मजरंमानंदरूपममृतमित्यादिभाष्योक्त श्रुतिस्मृतिबलेनज्ञानानंदाद्यात्मक दिव्यरूप
श्रवणेनरूपश्रुतेस्तद्विषयत्वस्यचभौतिकानीहरूपाणिभूतेभ्योसौपरोयतः ॥ अरूपवा
नतइत्यादिस्मृत्याप्रकृत्याव्यतीतत्वहेतुनाप्राकृतरूपहीनेगृहांतश्चाक्षुषप्रकाशेसत्यपि-
बाह्यप्रकाशाभावेनप्रकाशोनेत्युक्तिवदरूपश्रुतेरप्राकृत विग्रहेपिहरौप्राकृतरूपाभाववि
षयतयोपत्तेः ॥ अप्राकृतदिव्यविग्रहस्यचानित्यत्वाद्यनापादकत्वात्सौंदर्यादिसंभवा
च्चमहात्म्यवत्त्वाद्युक्तातत्रभक्तिरिति ॥ फलेतु भक्त्याक्षेपसमाधी ॥ ९ ॥ ॐ अतएवचो

पमासूर्यकादिवत् ॐ ॥ यत्पूर्वंनयद्वयेभगवदंशानाममात्रोनंतमात्रइत्यंतमैक्यकथन
यच्चारूपवदितिप्राकृतरूपराहित्यकथनंतदुभयमयुक्तं ॥ जीवस्यभगवदंशानांभेदाभे
दात् ॥ प्राकृतरूपवत्वाच्चेतिशंकनात्संगतिः ॥ अथपदोक्तभक्तिरयुक्तोतयुक्तेतिचिंता ॥
तदर्थं किंजीवःपरमात्मनाभिन्नाभिन्नोभिन्नएवेति ॥ तदर्थं किंपरमात्मनाजीवानां
समुदायसमुदायिभावोथबिंबप्रातिबिंबभावइति ॥ तदर्थं प्रतिबिंबत्वंकिमुपाधिकृत
त्वादिरूपमुततदधीनत्वादिरूपमिति ॥ आद्येत्वनादिनित्यजीवानामौपाधिकप्रति
बिंबत्वायोगेनसमुदायित्वरूपतयासमुदायिरूपेश्वरेणभेदाभेदौऔपाधिकभेदेसत्यपि-
स्वाभाविकस्वाभेदवतिस्वस्मिन्निवभक्तिरयुक्तेत्याद्येफलं ॥ अंतेतुतदधीनत्वादिरू
पप्रतिबिंबत्वस्यजीवानां युक्तत्वेनात्यंताभिन्नेहरौभक्तिर्युक्तेतिफलं ॥ पूर्वपक्षस्तु ॥

या० पृथगुपदेशादित्यत्रजीवेशभेदोक्तावपिसर्वचेतनसमुदास्येशत्वेनैकैकजीवस्यपरमात्म- मु.अ.
११८ नाभेदाभेदेपिभेदाविरोधात् ॥ औपाधिकभेदस्यचस्वाभाविकभेदेकार्याप्रतिबंधक ३।२
त्वेनस्वाभिन्नेतस्मिन्भक्तिरयुक्तेति ॥ नचासित्धोसित्धः चेतनत्वादंशत्वान्मच्छादिव
दितितत्सित्धेः ॥ बिंबप्रतिबिंबभावस्तु औपाधिकोनादिनित्ययोर्जीवेशयोर्न
युक्तइति ॥ सित्धांतस्तु ॥ जीवोनेशाभिन्नः तत्प्रतिबिंबत्वात् ॥ योयत्प्रतिबिंबः
सतेनाभिन्नोनभवति ॥ यथासूर्यकादिरित्यनुमानविरोधेनचेतनत्वादेरभेदासाधक
त्वात् ॥ नचासित्धोहेतुः ॥ जीवस्यापीश्वरस्वरूपांशत्वेमच्छादिसाम्यापत्याज्ञानैश्वर्या
द्यशेषप्रसंगरूपयुक्त्यारूपंरूपंप्रतिरूपोबभूवेतिश्रुत्या बहवःसूर्यकायद्वत्सूर्यस्यसदृशा- ११८
जलइतिस्मृत्याचतत्सिद्धेः ॥ नचानादिनित्यस्यौपाधिकप्रतिबिंबत्वायोगः ॥ पृथगुपदे

शातसंध्येसृष्टिराहहितद्गुणसारत्वादित्युक्तेर्भिन्नत्वतदधीनत्वतत्सदृशैरेवमैः प्रतिबिंब
त्वोपगमादिति ॥ १० ॥ ॐ अंबुवदग्रहणात्तुनतथात्वं ॐ ॥ पूर्वत्रबिंबसादृश्यादिना
जीवस्येशप्रतिबिंबत्वोक्तौतर्हिज्ञानानंदादिरूपसादृश्यरूपमुक्तेर्नित्यसिद्धत्वात्नतद-
र्थाभक्तिःकार्येतिशंकोदयात्संगतिः ॥ अत्राथपदोक्ताईश्वरभक्तिर्नकार्योतकार्येतिचिं
ता ॥ तदर्थं ईशज्ञानतत्प्रसादद्वाराज्ञानानंदादिब्रह्मसादृश्याभिव्यक्तेः ॥ श्रुतंफलत्वं
नसंभवत्युतसंभवतीति ॥ पूर्वपक्षस्तु ॥ ज्ञानानंदादिब्रह्मसादृश्यस्यपुंस्त्वादिवत्वस्ये
त्यत्रोक्तदिशाजीवस्वरूपतया नित्यसिद्धत्वात्तदभिव्यक्तेस्त्वनुबंधादिभ्यइतिवक्ष्यमा
णदिशाज्ञानहेतुभक्तिफलत्वायोगात् ॥ सुक्षाविवकदाचित्स्वयमेवसंभवेनचेश्वरापरो
क्षज्ञानतत्प्रसादद्वारापिभक्तिफलत्वं तस्यनयुक्तमितिफलाभावान्नकार्याभक्तिरिति ॥

सिद्धांतस्तु ॥ सादृश्यस्यनित्यसिद्धत्वेपिईषदभिव्यक्तेर्भक्तिविनाशुष्टौभावेपिसम्य
गभिव्यक्तिरूपमुक्तेर्यमेवैषइत्यादिभाष्योक्तश्रुतिस्मृतिबलेन भक्तिसाध्यत्वात्तदर्थंभ
क्तिरवश्यंकार्येति ॥ ११ ॥ ॐ वृद्धिह्रासभाक्त्वमंतर्भावादुभयसामंजस्यादेवं ॐ ॥
अत्रप्राक्फलहेतुत्वेनउक्तभक्तेस्तदुपलक्षितत्वेनसाधनजातस्यतरतमभावनिरूपणात्सं
गतिः ॥ पूर्वसूत्रोक्तंभक्त्युपलक्षितभक्त्यादिसाधनजातंकिंभक्तेष्वेकप्रकारमुतानेकप्र
कारमितिचिंता ॥ तदर्थं तत्फलतयोक्तानंदादिब्रह्मसादृश्याभिव्यक्तिः सर्वत्रैकप्रकारो
तानेकप्रकाराइति सैषानंदस्येत्यादेः वैराग्यप्रशंसापरत्वेनानंदतारतम्येमानाभावेनफ
लतारतम्यासिध्याभक्त्यादितत्साधनमपिभक्तेष्वेकप्रकारमेव फलवैषम्येपिसाधनवैष
म्येबाधकाभावाच्चेति पूर्वपक्षः ॥ सिद्धांतस्तु ॥ सैषेतिश्रुतेर्वैराग्यप्रशंसादिपरत्वस्यतद्भा



ष्यवैयर्थ्या दिनान्यत्रबृहद्भाष्यादिस्थलेषुभाष्यकारैरेवनिरासान्नचायामृतेपिखंडित
त्वात्सैषेत्यादिभाष्योक्तश्रुत्यादिसिद्धानंदादिरूपाफलतारतम्यान्यथानुपपत्त्यातत्सा-
धनेष्वतारतम्यमवश्यमभ्युपेयं ॥ अन्यथाविषमफलदातुरीश्वरस्यवैषम्यादिदोषापा
तात् ॥ सचनेत्युक्तंवैषम्यनयेसाधनस्योत्तमत्वेनेतिभाष्योक्तस्मृतिविरोधश्चेतिआनं
दादिश्रुतेर्मुक्तपरत्वंचाक्षरधियांत्वित्यत्राग्रेव्यक्तं ॥ १२ ॥ ॐ प्रकृतैतावत्वंहिप्रतिषेध
तिततोब्रवीतिचभूयः ॐ ॥ पूर्वत्रश्रौतानंदतारतम्यान्यथानुपपत्त्यातद्धेतुतारतम्य
निर्णयइवेहापिश्रुतावधिकरणव्यापारोक्त्यन्यथानुपपत्त्या पालनाख्यव्यापारनिर्णया
त्संगतिः ॥ अथपदोक्तभक्तिरयुक्तोतयुक्तेतिचिंता ॥ तदर्थं पालकत्वाख्यगुणोहरेर्न
युक्तउतयुक्तइति ॥ तदर्थं पालनंनामकश्चिद्व्यापारोनास्त्युतास्तीति ॥ पूर्वपक्षस्तु ॥

या० २० सृष्टस्यवस्तुनोयावत्संहारंस्थितेः स्वतःएवसित्धेः ॥ संहारादिकर्त्तुरसंहाराद्यतिरिक्तो सु.अ. ३।२
रक्षारूपोव्यापारएवनोतिनपालकत्वंहरेर्युक्तमिति ॥ सित्धांतस्तु ॥ युक्तैवहरौभक्तिः
पालकत्वाख्यगुणवत्वात् ॥ नचसंहारातिरिक्तःसनेनिवाच्यं ॥ नैतावदेनापरोअन्य
दस्त्युक्षासद्यावापृथिवीतिश्रुतौ पूर्वत्रअस्येदोषासुमतिः पप्रथातेत्यादिनोक्तसृष्टिसं
हारकर्तृत्वस्यनैतावदित्यनेनतावन्मात्रत्वं निषिध्यापरोअन्यदस्तीत्यादिनापालना
ख्यव्यापारानंतरस्याप्युक्तान्नादिदानेनपोषणादिरूपव्यापारांतरस्यपालनस्यसंभवा-
त्सृष्टिंचपालनंचैवेतिस्मृतेश्चैवेति ॥ फलेतुव्यक्ते ॥ १३ ॥ ॐ तदव्यक्तमाहहि ॐ ॥
पूर्वत्रजन्मादिसूत्रोक्तसृष्ट्याद्यष्टकेपालकत्वं प्रसाध्यस्वाज्ञानदत्वमिहसाध्यतइतिसं
गतिः ॥ अत्राथपदोक्तभगवद्भक्तिर्नकार्योतकार्येतिचिंता ॥ तदर्थं किमफलोतफल १२०

वतीति ॥ सार्किंईशस्यव्यक्तत्वेऽव्यक्तत्वेचोभयथापिपरमपुमर्थहेतुरीशापरोक्षहेतुक्त
ताव्यक्तत्वेपिईश्वरप्रसादद्वारातद्धेतुरिति ॥ पूर्वपक्षस्तु ॥ हरेस्तंभादिवत्प्रत्यक्षयोग्य
त्वेस्तंभादिप्रत्यक्षस्येव भक्तिविनापिप्रत्यक्षत्वसंभवात् अव्यक्तैकस्वभावत्वेधर्मादेरि
वभक्त्यादिसाधनेनापिप्रत्यक्षत्वासंभवात ॥ अन्यथातदीशिस्यापिप्रत्यक्षत्वेसमाराध
नेनापियक्षसाक्षात्कारवदीश्वरसाक्षात्कारसंभवात् ॥ अन्यथापिभूतानांस्थूलसूक्ष्म
विशेषेण प्रत्यक्षाप्रत्यक्षत्ववन्मूलरूपेणाव्यक्तस्यापि गृहीतरूपेणप्रत्यक्षत्वसंभवात् ॥
ज्ञानभक्त्यपरोक्षहेतुरितिव्यर्थासतांनकार्येति ॥ सिद्धांतस्तु ॥ अरूपमक्षरंब्रह्मसदा
व्यक्तमितिश्रुत्याव्यक्तैकस्वभावस्यापिआत्मावाअरेद्रष्टव्यःश्रोतव्यइत्यादिश्रुतिबलेन
21 भक्तिपूर्वकश्रवणाद्यभ्यासात्प्रसन्नेनाचिंत्यशक्तिकेश्वरेणैव तदापरोक्षस्यानित्याव्यक्ता

पिभगवानीक्षते निजशक्तितइत्यादिस्मृत्यातस्याभिध्यानादितिश्रुत्युक्तेनमोक्ष—
जस्यज्ञानजप्रसादसाध्यत्व लिंगेनाव्यक्तत्वप्रत्यक्षत्वेश्रुतिद्वयान्यथानुपपत्याच सिद्ध
त्वात् ॥ नतमाराधयित्वापिकश्चिव्द्यक्तीकरिष्यतीतिस्मृतिसिद्धाराधनेनाव्यक्तत्वलिं
गेनसूक्ष्मत्वादनुमानात् भक्तिहीनाराधनेनासौसूक्ष्मोनस्थूलइत्यादिश्रुत्यादितोगृही
तरूपेणच ईशप्रत्यक्षत्वस्याभावात्रगमाद्भक्तिरेवश्रवणादियुक्ताभगवदपरोक्षहेतुरिति
अर्थवतीभक्तिरवश्यंकार्यैति ॥ १४ ॥ ॐ उभयव्यपदेशात्वहिकुंडलवत् ॐ ॥ पूर्व
त्रहरेरव्यक्तत्वेप्रत्यक्षत्वेच मानाभावेनाव्यक्तस्यापिव्यक्तत्वोक्तिवदिहापि गुणात्मत्वे
पिगुणित्वेचोभयत्रमानाभावाद्गुणात्मनोपिगुणित्वमितिकथनात्संगतिः ॥ अनुप
दोक्ताहरिभक्तिर्नकार्यैतकार्यैतिचिंता ॥ तदर्थं तस्यगुणत्वंनास्त्युतास्तीति ॥ तदर्थं



गुणात्मनोहरेः गुणित्वसंभावनाप्रमाणाभ्यां हीनंयुक्तिविरुद्धंचाथाविपरीतामिति ॥
पूर्वपक्षस्तु ॥ तदात्मकेतद्वत्वस्यक्वाप्यदर्शनाद्गुणारूपहरेःगुणत्वमसंभावितं अतएवप्र
माणशून्यंच हरिर्नगुणवान् ॥ गुणात्मकत्वात् यथानस्वस्ववान्हरिरितिवाःयोयद्वा
न्सतदात्मकोन यथादंडवांश्चैत्रइतिवाइत्यादियुक्तिविरुद्धंच ॥ नचगुणात्मकमसिद्धं
समवायाभ्युपगमाच्चेत्यत्रसमवायापाकरणेन एकमेवाद्वितीयमितिगुणगुण्यादिभेद
निषेधेनतत्सिद्धेः अतोगुणित्वाभावातनहरौभक्तिःकार्यैति ॥ सिद्धांतस्तु ॥ कुंडला
त्मकस्याप्यहेः विशेषबलात्कुंडलित्ववत्प्रकाशात्मकस्याप्यादित्यस्यप्रकाशित्ववत् ॥
कालस्यपूर्वेणाभेदेपिपूर्वःकालः इतिविशेषणविशेषभाववच्च गुणात्मनोपिहरेःगुणित्वं
प्रतिनिधिविशेषबलान्नासंभावितं ॥ आनंदंब्रह्मणोविद्वान् अथैषपरमानंदइतिगुण

याo
१२२

त्वगुणित्वोभयव्यपदेशरूपप्रमाणाच्च शास्त्रयोनित्वन्यायेन युक्त्यगम्यतयाश्रुतेरस्त्वि

मु.अ.
३।२

त्यत्रोक्तन्यायेनयुक्त्याविरुद्धंचेति ॥ हरौभक्तिःकार्येति ॥ १५ ॥ ॐ परमतःसेतून्मा
नसंबंधभेदव्यपदेशेभ्यः ॐ ॥ पूर्वत्रेशगुणानांतदात्मकत्वं तद्धर्मवत्वंचोक्तमिहतु
अलौकिकत्वंलौकिकशब्दवाच्यत्वंचोच्यतइतिसंगतिः ॥ अथपदोक्ताहरावतिशयि
तभक्तिर्नकार्योतकार्येतिचिंता ॥ तदर्थं तदीयगुणजातं लौकिकमुतालौकिकमि
ति ॥ तदर्थं तस्यालौकिकत्वेज्ञानानंदादितत्पदवाच्यत्वमयुक्तमुतयुक्तमिति ॥ पूर्व
पक्षस्तु ॥ घटविलक्षणेघटपदवाच्यत्वादृष्ट्या भगवदानंदादौचआनंदंब्रह्मण इत्या
दावानंदादिपदप्रयोगेणतदन्यथानुपपत्त्या लौकिकत्वेमानाभावेनचतद्गुणजातंलौकि

१२२

कमेवान्यथातत्रतत्पदप्रयोगायोगइति ॥ सिद्धांतस्तु ॥ एषसेतुर्विधृतिर्यएषआनंदः

परस्येति ॥ यतोवाचोनिवर्तंतइतिएतस्यैवानंदस्यान्यानिभूतानिमात्रामुपजीवं
तीतिअन्यद्दानंतुजीवानांज्ञानंपरस्यचेति ॥ अदृष्टमव्यवहार्यमव्यपदेश्यमित्यादौ
ब्रह्मानंदादिगुणेषुलौकिकानंदादावसंभाव्यमानसेतुत्वोनमानत्वशब्दितपूर्णत्व बिंब
त्वलोकविलक्षणादृष्टत्वाव्यपदेश्यत्वादिधर्माणां श्रुत्यालौकिकत्वावश्यंभाविनितत्त
दृष्टप्रयोगस्य जिवेशगुणानामर्थप्रकाशकत्वानुकूल्यवेद्यत्वादिज्ञापनार्थत्वेनोपपत्तेः ॥
अलौकिकोपिज्ञानादितच्छब्दैनैवभण्यते ॥ ज्ञापनार्थायलोकस्येतिस्मृतेश्चालौ
किकमेवेशगुणजातमिति युक्तातत्रातिशयभक्तिरिति ॥ व्युत्पत्तिरेवपदानांतत्रायुक्ते
तिकार्याख्यादित्यत्रनिरसिष्यते ॥ १६ ॥ ॐ स्थानविशेषात्प्रकाशादिवत् ॐ ॥
प्रागुक्तबिंबत्वंहेतुकालौकिकत्वस्येहाक्षेपेणशंकोदयात्संगतिः ॥ अथपदोक्तातिशयित

भक्तिसिध्यर्थंप्रागुक्तमिशगुणानां बिबत्वहेतुकमलौकिकंनयुक्तमुतयुक्तमितिचिंता ॥
तदर्थं भगवदानंदादिगुणस्य विचित्रब्रह्माद्यानंदादिबिंबत्वमयुक्तमुतयुक्तमिति ॥
तदर्थं प्रतिबिंबवैचित्र्यमेवकारणमुतान्यदपीति ॥ पूर्वपक्षस्तु ॥ वृध्दिन्हासभाक्त्वमित्यत्रोक्तदिशाब्रह्माद्यानंदीनां मिथोविचित्रत्वात्तेषांचेशगुणप्रतिबिंबत्वेतांश्चप्रतीशगुनानांबिंबत्वेचतद्वदेवंवैचित्रंस्यात् ॥ अदृष्टानियमादित्यत्रादृष्टवैचित्र्येणप्रतिबिंबवैचित्र्योक्तावपिस्वाभाविकानंदादेरादिमत्कारणकत्वायोगइति ॥ तस्यैवेहाक्षेपेण बिंबवैचित्र्यनिबंधनत्वात्प्रातिबिंबवैचित्र्यस्यतथाचभगवद्रूपेष्वुगुणतारतम्यंचस्यात् ॥ तच्चनेत्युक्तं ॥ नस्थानतइत्यत्रअतोबिंबत्वाभावान्नेशगुणानामलौकिकत्वमिति ॥ नतत्रातिशयितभक्तिःकार्येति ॥ सिध्दांतस्तु ॥ बिंबवैचित्र्याभावे



पिसूर्यकांतादिस्थानगुणेनसूर्यादिप्रातिबिंबत्वेग्निजनकत्वादिवैचित्र्यवत् ब्रह्माद्यनादिभक्त्यादिस्थानगुणवैचित्र्येणबिंबभूतभगवदैश्वर्यवशेनचाविचित्रभगवदादिप्रतिबिंबवैचित्रस्योपपत्तेः ॥ ब्रह्मादिगुणवैशेष्यादित्यैश्वयात्परमाद्विष्णोरितिच स्मृतेश्चेशगुणानांवैचित्र्येपिबिंबत्वयुक्तमित्यलौकिकत्वादातिशायिताभक्तिरावश्यकीति ॥१७॥
ॐ तथान्यत्प्रतिषेधात् ॐ ॥ स्थानविशेषादित्यस्याबिंबप्रातिबिंबभावरूपहेतुसाधकतयापरमत इत्यनेनैकार्थेनाव्यवधायकत्वात्परमतइत्यत्रोक्तन्यायातिदेशकत्वात्संगतिः ॥ अथपदोक्ताभक्तिर्नकार्येतिकार्येतिचिंता ॥ तदर्थं ब्रह्मव्यक्तमुताव्यक्तमिति ॥ तदर्थं ध्यानप्रतीतमेवब्रह्मोततदन्यादिति ॥ पूर्वपक्षस्तु ॥ फलमतामितिवक्ष्यमाणदिशा ब्रह्मणएवफलप्रदत्वात् ॥ तंयथायथेत्यादेरुपासितस्यैव फलदा

तृत्वातध्यातस्यब्रह्मत्वेतस्या फलदातृत्वेनध्यानवैयर्थ्यात्ध्यातृपुरुषबहुत्वप्रयुक्तध्येय
बहुत्वस्यनस्थानतइत्युक्तन्यायेनभेदहीनेपिहरौतद्रूपाणांनानात्वेनोपपत्तेश्च ॥ ध्यान
कालप्रतीतमेवब्रह्मेतिभक्तिंविनापिपुरुषप्रयत्नेनव्यक्तत्वसंभवान्नतत्रावश्यकीति ॥
सिद्धांतस्तु ॥ सेतून्मानत्वादिनेशगुणजातस्यलोकतोन्यत्ववत् अरूपवदेवेत्यादा
वुक्तदिशाअप्राकृतनिर्दोषसर्वसुलक्षणादिव्यस्वरूपविग्रहस्यहरेर्नानादुर्लक्षणयुक्तध्यान
प्रतीतेवस्तुत्वायोगेनतदन्यत्वावश्यंभावात्तदेवब्रह्मत्वंविद्धिनेदंयदिदमुपासत इतिश्रु
तौध्यानप्रतीतस्यब्रह्मत्वंप्रतिषिध्यतदन्यदेव ब्रह्मेत्युक्तत्वाच्चध्यानप्रतीतादन्यदेवाव्य
क्तंब्रह्मेति ॥ नचफलाभावापातः ॥ पश्यंतिपरमंब्रह्मेतिस्मृत्याध्यानकालेप्रतीतवा
सनामयप्रतिमास्थस्यैवफलप्रदोपपत्तेः भक्तिरावश्यकीति ॥ १८ ॥ ॐ अने

नसर्वगतत्वमायामयशब्दादिभ्यः ॐ ॥ ॥ एवमुक्तत्वेपिहरेः प्रसंनस्यापरोक्ष
दानमिवस्वस्वातंत्र्यमप्यन्यस्यक्वचिद्दद्यादितिशंकनात्संगतिः ॥ अथपदोक्तहरावे
वातिशायितभक्तिर्नयुक्तोतयुक्तेतिचिंता ॥ तदर्थं किंक्वचित्कदाचिदन्योपिकर्तो
तसर्वत्रसर्वदा ॥ सर्ववस्तुर्नहरिरेवसृष्ट्यादिकर्तेतितदर्थंस्वस्वातंत्र्यंकदाचिदन्यस्या
पिदद्यात्युतनेति ॥ पूर्वपक्षस्तु ॥ हरेः कृष्णाद्यवतारेषुपरप्रेष्यत्वाद्यसंभावितविविध
लीलादर्शनेन क्वचित्कदास्वस्वातंत्र्यस्याप्यन्यस्यदानसंभवाद्धरेरेवसर्वसृष्ट्यादौमाना
भावाल्लोकेराजादीनांखंडेशत्वदर्शनात ॥ देशांतरादावन्योपिसृष्ट्यादिकर्तेत्यनुमा
नसंभवाच्चनहरावेवातिशयिताभक्तिर्युक्तेति ॥ सिद्धांतस्तु ॥ स्वातंत्र्यात्किंइतिविष्णु
र्नहिस्वातंत्र्यमन्यगं ॥ करोतिक्वापीत्यादेरुक्तस्वातंत्र्यस्यैवक्रीडावगमान्नान्यत्रस्वातं

ऽन्यदानस्यासंभावितत्वाद्धरिरेवसर्वकर्तेत्यस्यएषसर्वगत इत्यादिभाष्योक्तश्रुतिसिद्ध-त्वादनुमानस्यैतच्छ्रुतिबलेनकर्त्रंतरेमानाभावाच्चहरिरेवसर्वसृष्ट्यादिकर्तोतियुक्तातत्रे-वातिशयिताभक्तिरिति ॥ १९ ॥ ॐ फलमतउपपत्तेः ॐ ॥ एवंहरेरेवसर्वकर्तृत्वेतस्य वैषम्यादिदोषनिरासायपूर्वोक्तदिशाकर्मसापेक्षत्वेतर्हिकर्मणएवास्तुफलप्रदत्वमितिवा कर्मणएवफलोदयात्प्रागुक्तंहरेः सर्वज्ञत्वमयुक्तमितिवाशंकनात्संगतिः ॥ अथपदोक्ताभक्तिर्नकार्यातत्कार्येतिचिंता ॥ तदर्थं किंकर्मैवफलदातृहरिस्तत्रशेषभूत उतावि परीतमितितदर्थंरातिदातुः परायणमितिश्रुतंहरेः फलदातृत्वंगौणमुतमुख्यमिति ॥ तदर्थंकर्मणः फलान्वयव्यतिरेकौशेषित्वकल्पकोउतशेषतयाविविक्ताविति ॥ तदर्थंकर्मणःशेषत्वकल्पकंनास्त्युतास्तीति ॥ पूर्वपक्षस्तु ॥ ईश्वरःफलदातेतिपक्षेपिकर्मणोवैय्यर्थ्यायवेदप्रामाण्यायहरेर्वैषम्याद्यभावायकृतकर्मणः फलदृष्ट्याचकर्मापेक्षत्वेवश्यंभा-विनिफलस्यकर्मान्वयव्यतिरेकित्वात्तस्यचान्यथासिद्धिकल्पकाभावाद्रातिदातुरिति-श्रुतेरेषह्येवसाधुकर्मकारयतीत्यादिनाहरेः फलप्रदकर्महेतुतयागौणत्वेनाप्युपपत्तेराप्ततमजैमिनिमतत्वाच्चकर्मैवप्राधान्येनफलप्रदंहरिस्तुकर्मशेषइतिनतत्रभक्तिः कार्येति॥ सिद्धांतस्तु ॥ चेतनत्वयुक्त्यापुण्येनपुण्यंलोकंनयतिइत्यादिविशेषश्रुत्याचरातिदातुरितिश्रुतेर्बलवत्तयागौणार्थत्वायोगात्ब्रह्मणः प्राधान्येनफलदातृत्वेपिकर्मणः कारणत्वेनान्वयव्यतिरेकयोर्जैमिनिमतस्यचोपपत्तेः ॥ ब्रह्मैवफलप्रदंनकर्मकिंतुकरणमेवेतियुक्तातत्रभक्तिरिति ॥ २० ॥ इतिश्रीमद्राघवेंद्रयतिकृतायांन्यायमुक्तावल्यांतृतीयाध्यायस्यद्वितीयः पादः समाप्तः ॥ श्रीकृष्णार्पणमस्तु ॥ ॥ ॥

॥ श्रीगुरुभ्योनमः ॥ हरिः ॐ ॥ प्रागुक्ताथपदार्थवैराग्यभक्तिसाध्यज्ञानहेतुर्जिज्ञासा
शब्दितोपासनास्मिन्पादउच्यते ॥ साचद्वेधासर्वस्वशाखाश्रवणमननरूपाध्यानरूपाचे
ति ॥ तत्रसाध्यानांगत्वादादावुच्यते ॥ ॐ सर्ववेदांतप्रत्ययंचोदनाद्यविशेषात् ॐ ॥
अत्रजिज्ञासाशब्दोक्ते सर्वस्वशाखाश्रवणमननेन कार्यउतकार्यैइतिचिंता ॥ तदर्थं ब्रह्म
स्वस्वशाखोक्तरीत्याज्ञेयमुतसर्ववेदोक्तादिशेति ॥ तदर्थं हरेर्ज्ञेयत्वेसाधकंनास्त्युतबाध
कंचास्ति अर्थविपरीतामिति ॥ तदर्थं शाखाभेदगतिशाखमर्थभेदोक्तिश्चनिरव
काशाउतसावकाशेति ॥ पूर्वपक्षस्तु ॥ ब्रह्मतयाज्ञेयमित्यत्रसाधकाभावात् ॥ प्रत्युत
वेदगशेरकैकाधिकारिकत्वेकाण्वादिशाखाभेदायोगस्य विज्ञानमानंदंब्रह्मेत्यादिरूपेण
प्रतिशाखमर्थभेदोक्त्ययोगस्यएकैकस्य सर्वशाखाध्ययनाभावेन ॥ तदर्थं ज्ञानायोग
स्यमंदानांब्रह्मज्ञानवैमुख्यप्रसंगरूपस्यच बाधकस्याभावान्नतच्छाखोक्तमेवतेनज्ञेयमिति
नोक्तरूपश्रवणमननेकार्यैइति ॥ सिद्धांतस्तु ॥ भगवद्दानसंपादनार्थं प्रवृत्तानामा
त्मेत्येवोपासीतेत्येवमादिकाण्वादितत्तच्छाखागतविधीनांज्ञानार्थंप्रवृत्तविध्युक्तंभक्तानां
अत्रह्येतेसर्वएकीभवंतीतिनह्यस्यकर्मक्षीयतइत्यादितत्रतत्रविधिसमीपाम्नाताथवादा
नांचतथास्वाध्यायोध्येतव्यः ॥ वेदकृत्स्नोधिगंतव्यःसरहस्योद्विजन्मनेत्येवमादे
रर्थावबोधकस्वाध्यायाध्ययनविधेश्चसर्वाधिकारिसाधारण्येन ॥ सर्ववेदोक्तमार्गे
णकर्मकुर्वीतेतिस्मृत्यासर्ववेदोक्तमार्गानुष्ठानेसर्वेषामधिकारावगमेनचतदन्यथानुपपत्ति
रूपयुक्त्याच सर्ववेदानधीत्यविचार्यचज्ञातुमिच्छेन्मुमुक्षुरितिश्रुत्यासर्वान्वेदान्सेति-
हासानितिस्मृत्याचैकैकस्यसर्व शाखाध्यनद्वारातदुक्तार्थज्ञानाधिकारावगमेनसाधक-

सद्भावात् शाखाभेदोल्पशक्तिज इतिस्मृत्याकाण्वादिशाखाभेदस्यशक्यहेतुकत्वेनप्र
तिशाखमर्थभेदोक्तेरेकशाखार्थभेदोक्तिवत् प्रसंगभेदानुवादादिरूपतयासर्ववेदोक्तरी-
त्याब्रह्मज्ञेयमितिनियमस्यसर्वासामपांसमुद्रएकायनमित्युक्तनियमस्येवऽयथानदीनां-
सलिलंशक्येसागरगंभवेदितिस्मृत्यातत्तच्छक्त्यनुसारितयोपपत्याप्रागुक्तबाधकानामभ-
भावाच्चसर्ववेदोक्तादिशायथाशक्तिसर्वसच्छास्त्रश्रवणमननेसर्वैरपिकार्यएवेति ॥ फलेतु
जिज्ञासाशब्दार्थैकदेशाक्षेपसमाधी ॥ १ ॥ ॐ उपसंहारोर्थाभेदाद्विधिशेषवत्समानेच
ॐ वैय्यर्थहेतुनाप्रागुक्तयथाशक्तिसर्ववेदार्थपरिज्ञानस्याक्षेपेणेहशंकनात्संगतिः ॥ अ
त्रपूर्वोक्तंसर्ववेदोक्तपरिज्ञानं नावश्यकमुतावश्यकमितिचिंता ॥ तदर्थंसार्वत्रिकगुणो
पसंहारानुपसंहाराभ्यांवेदार्थभूतब्रह्मध्यानंनयुक्तमुतयुक्तमिति ॥ पूर्वपक्षस्तु ॥ ॥



नोभयत्रापिध्यानंसंभवतीति ॥ तथाहि ॥ नतावदुपसंहृत्यध्यानंकार्यमितिपक्षोयुक्तः
॥ सर्वपरिज्ञानस्यक्रमभावित्वेनशक्यत्वेपिसार्वत्रिकसर्वगुणोपसंहारेणज्ञानस्याविक्षि-
प्योक्तगुणानामेकबुध्युपारूढत्वरूपस्याशक्यत्वात् ॥ सर्वाशक्यत्वेपिकाश्चित्प्रातितथा
ध्यानंशक्यमितिकल्पनस्यकल्पकशून्यतयायोगात् ॥ आत्मेत्येवोपासीतेतिसाधार
णात्मकत्वमत्रोपासनविधिवाक्यविरुद्धंच ॥ परोवरीयः प्रभृतिप्रकरणभेदायोगात् ॥
नाप्युपसंहृत्यध्यानंकार्यमितिपक्षः ॥ स्पष्टप्रमाणाभावात् ॥ आत्मेत्येवेत्यत्रैवकार
स्यायोगव्यवच्छेदकतयापिसावकाशतोपपत्तेः ॥ नचपरोवरीयोवैश्वानरादिप्रकरण
भेदएवानुपसंहारेमानमन्यथासनस्यादित्युक्तं ॥ एकस्मिन्नपिप्रकरणेसर्वगुणोक्तेरपि
संभवात् ॥ अतउभयत्रापिध्यानस्याप्युक्तत्वात् ॥ यत्ध्यानांगतयाप्रागुक्तंशक्तानांस

र्वेवेदार्थपारिज्ञानअशक्तानांयथाशक्तिकतिपयशाखार्थपरिज्ञानंसंपाद्यमितितत्रान्यतर
दपित्र्यर्थत्वान्नावश्यंसंपाद्यतामर्हतीति ॥ ॥ सिद्धांतस्तु ॥ ॥ उभयत्रापिध्यानं
संभवतीति ॥ प्रागुक्तंद्विरूपमपिवेदार्थपरिज्ञानंयुक्तमेवेति ॥ तथाहि ॥ सर्ववेदो
क्तगुणानांदोषाभावानांचोपसंहारेणध्यानस्योपास्यएकइतिभाष्योक्तश्रुतौसर्वैर्गुणाः–
सर्वदैवह्युपास्याइतिश्रुतौचविहितत्वात् अन्यथाविहिताक्रियालोपेनानर्थकप्रसंगात् ॥
तथाछांदोग्येसप्तमेऋग्वेदंभगवोध्येमीत्यादिनानारदेनात्मनः सर्वविद्याविहितत्वमु
क्त्वासोहंमंत्रविदेवनात्मविदितिश्रुत्यंतरेचसोहंनामविदेवनात्मविदित्युक्त्याचसर्ववि-
द्यानांभगवन्नामत्वेनतद्गुणाभिध्यायकत्वान्यथानुपपत्तियुक्त्याचतथाध्यानस्यसिद्ध
त्वाद्गुणाभिधानस्यप्रयोजनाभावादितिन्यायेनध्यानार्थत्वान्नामवाएताःब्रह्मणःसर्व–



विद्यास्तस्मादेकःसर्वगुणैर्विचिंत्यइतिश्रुतिसिद्धत्वाच्च ॥ आत्मेत्येवकारस्यायोगव्य–
वच्छेदकत्वेनापिबोधकत्वात्प्रकरणभेदगतस्यपुरुषविद्यायामित्यत्रवक्ष्यमाणत्वादुपसं
हृत्यध्यानंकार्यमितिपक्षोयुक्तः ॥ तत्रानुपसंहृत्यध्यानंकार्यमितिपक्षोयुक्तएवउपसंहृ
त्यध्यानस्याशक्यत्वात्प्रकरणभेदात् ॥ सएषपरोवरीयानुद्गीथःसएषोनंतइत्यादिप्रकर
णेषुपरोवरीयस्त्वादिकतिपयगुणस्यैवोक्त्याएकत्रसर्वगुणोक्तेरभावात् ॥ तस्मादुभयथा
ध्यानस्याप्रामाणिकत्वेनयुक्तत्वाद्युक्तरूपवेदार्थपरिज्ञानमर्थवदेवेति ॥ २ ॥ ॐ प्राप्त
श्चसमंजसं ॐ ॥ अत्रप्रागुक्तगुणोपसंहारानुपसंहारपूर्वकध्यानयोरधिकारिभेदेनयुक्त
त्वसमर्थनात् संगतिः ॥ जिज्ञासाशब्दाभिमतं प्रागुक्तद्विरूपध्यानमयुक्त मुतयुक्तमि
तिचिंता ॥ तदर्थ मधिकारिभेदेनव्यवस्थानसंभवत्युतसंभवतीति तदर्थं व्यवस्थाप

१० कंनास्त्युतास्तीति ॥ पूर्वपक्षस्तु ॥ द्विरुपध्यानस्य।विरोधेनैकस्यायोगाददधिकारिभेदे मु.अ.
१९ नव्यवस्थितत्वस्यचात्राधिकारोत्रास्येतिव्यवस्थापकप्रमाणाभावेनायोगादयुक्तं द्विरू ३।३
पध्यानमिति ॥ सिद्धांतस्तु ॥ यस्ययावद्गुणाःस्पष्टंप्रतिभासंत्युपासते ॥ युगपत्तस्व
भुजौयद्वद्ध्यायेत्तावतएवसइति श्रुत्युक्तदिशागुणैः सर्वैरुपास्योसौब्रह्मणेत्यादिस्मृत्युक्त
दिशा।चध्यानकालेच युगपत्स्पष्टसर्वगुणप्रतीत्यासर्वगुणप्रतीतिरूपयोग्यताविशेषयुक्त
ब्रह्मतदन्याधिकारिभेदेनव्यवस्थोपपत्तेर्युक्तंद्विरूपध्यानमिति ॥ ३ ॥ ॐ सर्व
भेदादन्यत्रेमे ॐ ॥ अत्रपूर्वत्रसर्वगुणध्यानाध्यानयोर्विरोधोक्तावत्रान्यवैयर्थ्यंनिरस्य
तइतिसंगतिः ॥ अत्रजिज्ञासापदोक्तपूर्वत्रप्रकृतंसर्वगुणध्यानंनकार्यमुतकार्य १२९
मितिचिंता ॥ तदर्थंतस्यकालातिशयवत्वनिर्णयोनसंभवत्युतसंभवतीति तदर्थ

तन्निर्णायकंनास्त्युतास्तीति ॥ पूर्वपक्षस्तु ॥ मोक्षरूपफलस्यासर्वध्यानेनापिसिद्धेः
सर्वगुणध्यानस्यासर्वगुणध्यानसाध्यफलातिशयवत्वानिर्णयस्यचानिर्णायकाभावेना –
योगाद्यर्थंतत्रकार्यमिति ॥ सिद्धांतस्तु ॥ सर्वगुणध्यानमसर्वगुणध्यानादधिकंफलवत्
ततोमहत्वात् यत्साधनंयतोमहत्तत्ततोधिकफलवत् ॥ अग्निष्टोमादितोवाजपेया-
दिकमित्यनुमानेनसंपूर्णोपासनाद्ब्रह्मासंपूर्णानंदभाग्भवेदित्यादिस्मृत्याच फलातिशय
वत्वनिर्णयोपपत्तेः ॥ कार्यमेवसर्वगुणध्यानमिति ॥४॥ ॐ आनंदादयः प्रधानस्य
ॐपूर्वत्रोक्ताधिकारिभेदेनचद्विरूपोपास्तिरयुक्तासर्वमुमुक्षुसाधारणोपास्तिमात्रानिर्ण
येताद्विशेषावसरादितिशंकनातसंगतिः ॥जिज्ञासापदोक्तंभगवद्ध्यानंनयुक्तमुतयुक्तमि
तिचिंता ॥ तदर्थं सर्वमुमुक्षुध्येयगुणनिर्णयोनसंभवत्युतसंभवतीति ॥ तदर्थं सर्व

ध्येयगुणाःसंख्यानिर्देशाभ्यांक्लृप्ताःपृथक्नसंन्यात्युतसंतीति ॥ पूर्वपक्षस्तु ॥ नसंख्या
निर्देशाभ्यांक्लृप्ताः पृथक्नसंतिगुणाः ॥ यदिभवेयुस्तर्हिकियंतः यदिचतुः पंचषाः
आनंदादयइत्युच्येततर्हिकेषांचित्समुच्चयेन्येषामपिसमुच्चयप्रसंगेननियमासंभवात् ॥
आनंदादिभ्योन्यएवेत्यपिवक्तुंशक्यत्वेनैतएवेतिनिर्देशक्लृप्त्यभावाश्चेति सर्वमुमु
क्षुध्येयगुणनिर्णयाभावान्नभगवत्ध्यानंकार्यमिति ॥ सिद्धांतस्तु ॥ सर्वेषांबहुगुणो
पासनेअशक्यत्वात् सर्वापेक्षितस्यनिर्दोषानंदानुभवरूपमोक्षस्यतंयथायथोपासतइ
तिश्रुत्यातदनुगुणोपासनसाध्यत्वाच्च ॥ निर्दोषत्वज्ञानानंदादीनां प्रमाणमावश्यक
त्वात् ॥ आत्मत्वशब्दितस्वामित्वस्यस्वसंबंधनुस्मरणस्यभगवत्प्रीतिहेतुत्वेनात्मेति 130
तूपगच्छंतीति वक्ष्यमाणदिशावश्यकत्वात् ॥ सच्चिदानंदआत्मेत्यादिस्मृतेश्चसदा

दयश्चत्वारएवेति संख्यानिर्देशाभ्यांक्लृप्तिसंभवेनध्येयगुणनिर्णयाद्युक्तमेवभगवत्ध्यान
मिति ॥ ५ ॥ ॐ प्रियशिरस्त्वाद्यप्राप्तिरुपचयापचयौहिभेदे ॐ ॥ चत्वारएवे
तिप्रागुक्तनियमाक्षेपेणशंकनात्संगतिः ॥ चत्वारएवेतिप्रागुक्तनियमोयुक्तउतायुक्तइ-
तिचिंता ॥ तदर्थंप्रियमेवशिरइत्यादिनाश्रुताप्रियशिरस्त्वादयः सर्वोपास्याउतने
ति ॥ तदर्थंतेषांसर्वानुपास्यत्वेप्रागुक्तफलप्राप्तिर्नास्त्युतास्तीति ॥ पूर्वपक्षस्तु ॥
प्रियशिरस्त्वादयोपिसर्वोपास्यास्तेषांआनंदविशेषत्वात् ॥ आनंदादीनांचस्वाभि
मतफलावाप्त्यर्थंसर्वोपास्यत्वोक्तेः अन्यथाफलाभावापातात् ॥ अतः प्रागुक्तनिय
मोनयुक्तइति ॥ सिद्धांतस्तु ॥ आनंदविशेषमात्रेणप्रियशिरस्त्वादेः सर्वोपास्यत्वे
सर्वगुणानामपिगुणचतुष्टयविशेषत्वस्यवक्तुंशक्यतयासर्वेषांसर्वगुणोपास्तिप्रसंगात्त-

स्यचदर्शनाच्चेत्यत्रउक्तानंदश्रुति सिद्धफलभेदपरिलोपापत्याअनिष्टत्वेनफलभेदासि-
द्ध्यर्थंगुणोपासनेपितारतम्यस्यवाच्यत्वान्नैवसर्वगुणाः सर्वैरुपास्यामुक्तिभेदतइतिस्मृ
तेश्चनसर्वोपास्याःप्रियशिरस्त्वादयः ॥ नचैवंफलाभावः ॥ यथायोग्यान्गुणान्गानु
पास्यफलंभवेदित्यादिश्रुत्या विशेषानुपासनेपियोग्यगुणोपासनेनैवमुक्तिफलप्राप्तेरवग
मादितिनोक्तनियमभंगइति ॥ ६ ॥ ॐइतरेत्वर्थसामान्यात्ॐ ॥ पूर्वत्रयथायोग्या
नितिश्रुत्यायोग्यगुणोपासनेनैवफलप्रात्प्युक्तौदेवानांचतुर्गुणाधिकगुणोपासनेयोग्य-
तानिश्चयासंभवात्तेषामाधिकगुणोपास्तिरयुक्तेतिशंकनात्संगतिः ॥ जिज्ञासापदोक्तं
चतुर्गुणाधिकगुणोपासनंनतुकार्यमुतकार्यमितिचिंता ॥ तदर्थं तदधिकारिणांदेवानां
योग्यतानियमानिर्णयोशक्यउताशक्यइति ॥ तदर्थं प्राप्तेश्चेत्यत्रोक्तंध्यानकालीन



गुणभानस्ययोग्यतानिर्णायकत्वमयुक्तमुतयुक्तमिति ॥ पूर्वपक्षस्तु ॥ ध्यानात्पूर्व
मेवयोग्यतानियमाहानेःयोगोपासनप्रसंगात्तस्यचासत्यायोग्यान्यनुपास्यान्यफल -
त्व ॥ विपर्ययाभ्यामितिसांकर्षणसूत्रोक्तदिशानर्थफलत्वेनध्यानकालीनगुणभानस्य
योग्यतानिर्णायकत्वाभावान्नाधिकोपासनंकार्यमिति ॥ सिद्धांतस्तु ॥ तत्तत्प्राप्यफ
लापेक्षयोपासनयोग्यतानिर्णयोपपत्तेर्भाव्युत्कर्षकसर्वज्ञगुरूणातत्तत्प्राप्यभविष्यत्का--
लानुसारिगुणोपपत्तेश्चचतुर्भ्योधिकोपासनंकार्यमेवेति ॥ ७ ॥ ॐ आध्यानायप्रयोजनंत
जनाभावात् ॐ ॥ एवंपूर्वत्रमंदमध्योत्तमाधिकारिभेदेनानुपसंहारोपसंहारानुक्तातयो
संज्ञातश्चेदितिप्रकरणभेदादपिचयन्मानमुक्तंतदेवेहाक्षिप्यसमाधीयतइतिसंगतिः ॥
अत्रजिज्ञासापदाभिमतौप्रागुक्तगुणोपसंहारानुपसंहारौनकार्यावुतकार्याविितिचिंता ॥

तदर्थं तयोर्मानंनास्त्युतास्तीति ॥ तदर्थं प्राक्संज्ञातइतिप्रकरणभेदादितिचोक्तमुभ
यत्रमानंनयुक्तमुतयुक्तमिति ॥ पूर्वपक्षस्तु ॥ संज्ञातश्चेत्यत्रोक्तदिशासर्वविद्यानांभग
वन्नामत्वेनतत्रगुणाभिधानस्योपसंहारार्थत्वेसर्वगुणानामेकत्रैवोक्तिप्रसंगेनविक्षिप्य–
नानास्थानेषूक्तेर्व्यर्थत्वान्मोक्षस्यानुपसंहारेणापिसिद्ध्योपसंहारस्यव्यर्थत्वाच्च ॥ अ
तएवव्यर्थविधेरश्रद्धेयत्वेनविधिशेषवदित्यत्रोक्तविहितत्वयुक्तेरप्यप्रयोजकत्वात्तत्त–
द्विद्याप्रकरणेष्वेतावदेवोपासनमित्युक्त्यभावेनप्रकरणभेदस्यानुपसंहारेमानत्वेनमा–
नाभावान्नकार्यावितौद्वाविति ॥ सिद्धांतस्तु ॥ गुणोक्तिरुपसंहारेन्यप्रयोजनाभावा
न्नानास्थानेषूक्तानामपिउपसंहारेमुक्तौफलातिशयभावेनतथोक्तेरर्थवत्त्वात्आत्मेत्ये–
वोपासीतेतिश्रुतान्यव्यवछेदपूर्वमात्मत्वोपासनविधानात्प्रागेववकारस्यायोगव्यवछे–

दकशक्तावपीहप्राप्तेश्वतत्रोक्तन्यायेनाधिकारिभेदेनाव्यवच्छेदकत्वाविरोधाच्चद्वावपिका
र्याविति ॥ ८ ॥ ॐ आत्मगृहीतिरितरवदुत्तरात् ॐ ॥ आत्मेत्येवोपासीतेतिपूर्वोक्तश्रु
तिश्चैवकारस्यस्वामित्वान्यज्ञानादिव्यवच्छेदकप्राप्तावत्रसनेत्युच्यतइतिसंगतिः ॥ अत्र
जिज्ञासापदाभिमतमानंदादयइत्यत्रोक्तंचतुर्गुणोपासनंनयुक्तमुतयुक्तमितिचिंता ॥
तदर्थं तत्किंप्रागुक्तश्रुतिविरुद्धंनवेति ॥ तदर्थं आत्मेत्येवेतिप्रागुक्तश्रुतात्मशब्दः
किंसुशकत्वादियुक्तयास्वामित्वमात्रवचनउतवाक्यशेषबलाद्दानादिचतुर्गुणवचन-
इति ॥ पूर्वपक्षस्तु ॥ आत्मत्वमात्रोपास्तेःसुशकत्वाद्दास्वापरोक्षहेतुत्वाच्चसावधा
रणश्रौतात्मपदस्यस्वामिमात्रवचनत्वेनतन्मात्रोपासनस्यैवकार्यत्वादयुक्तंचतुर्गुणोपा
सनं ॥ वाक्यशेषस्तुश्रुतित्वेनाप्युपपद्यतइति ॥ सिद्धांतस्तु ॥ अत्यलौकिकपरमेपुम

र्थंहेत्वापरोक्ष्येतिस्तुशकत्वस्यगुणत्वात् गुणत्वेपिवासर्वेषांमुमुक्षूणांफलसाम्यादफलते
त्यानंदनयोक्तिन्यायेन स्वापेक्षितज्ञानानंदादिफलप्राप्त्यर्थत्वेनान्योपासनस्याप्या-
वश्यकत्वाद्वाक्यशेषस्यार्थवादत्वेप्यवरुद्धस्वार्थतात्पर्याबाधात् ॥ प्राणन्नेवप्राणोनाम
भवतिमन्वानोमनइत्यादिपूर्ववाक्येप्राणपदादिनाप्रकृतानंदादिगुणानांपरामर्शेनात्र-
ह्येतेसर्वएकीभवंतीत्यात्मगुणे आनंदादिगुणानामंतर्भावोक्तिपरवाक्यशेषानुरोधेनानं
दानुभक्त्वाच्चेत्यादिस्मृत्यनुरोधेनचात्मशब्दस्यस्वामित्वादिचतुर्गुणवचनत्वेन तदविरो
धाद्युक्तंसर्वाधिकारिकचतुर्गुणोपासनामिति ॥ नचैवमनुपसंहारमानत्वोक्तिविरोधः ॥
अस्यानुपसंहाररूपत्वात् ॥ ९ ॥ ॐ अन्वयादितिचेत्स्यादवधारणात् ॐ ॥ १३३
अत्रात्मपदस्यप्रागुक्तानुपसंहारमानत्वमाक्षिप्यसाध्यतइतिसंगतिः ॥ अत्रप्रागुक्तमा

त्मपदस्यानुपसंहारमानत्वमयुक्तमुतयुक्तमितिचिंता ॥ तदर्थमात्मपदोक्तगुणाउपसं
हर्तृमात्रोपास्याउतानुपसंहर्त्रुपास्याअपीति ॥ तदर्थं आत्मशब्दोखिलगुणानामपिप्र
त्यायकत्वेनानुपसंहर्तॄन्प्रति चित्रमकरशेषव्यवस्थयातत्तद्योग्यगुणप्रत्यायकतयानिर्ण-
यकरइति ॥ पूर्वपक्षस्तु ॥ आत्मेत्येवोपासीतेत्यस्यचोदनाद्यविशेषादितिन्यायेना
खिलगुणध्यातृब्रह्मादीन्प्रत्यपिप्रवृत्तेस्तत्रात्मशब्दस्यानुपसंहर्तृमात्रयोग्यगुणबोधकत्वे
आत्मेत्येवेत्यवधारणायोगेनतदन्यथानुपपत्याआप्तव्याप्तेरात्मशब्दः परमस्यप्रयुज्यत
इतिस्मृत्याचात्मशब्दस्यसर्वगुणवाचित्वेनानुपसंहर्तॄन् चतुर्गुणाद्युपासकान्प्रतितत्तद्यो
ग्यमात्रगुणाप्रत्यायकतयातस्याचितमक्षरत्वात् तदुक्तगुणाउपसंहर्तृभिरनुपास्याइत्यु-
क्तमनुपसंहारमानत्वं ॥ नचतस्यसर्वगुणप्रत्यायकत्वेपिस्वस्ययोग्यगुणमात्रंसर्वैरुपास्य

मितिशक्यंआत्मेत्येवेत्यवधारणेनात्मशब्दस्ययावत्प्रतीतंतावतोप्युपास्यत्वप्रतीतेः॥
अन्यथावधारणविरोधादिति ॥ सिद्धांतस्तु ॥ आत्मशब्दस्यसर्वगुणवाचित्वेपितत्त
द्गुणोपासनयोग्यान्सर्वगुणान्वक्तीत्यस्यतत्तदनुभवसिद्धत्वेन तस्याचित्रमकरतयात-
दुक्तगुणानांसर्वोपास्यत्वायुक्तमनुपसंहारमानत्वमिति ॥ १० ॥ ॐ कार्याख्यानाद
पूर्वं ॐ ॥ पूर्वत्राधिकारिणांस्वस्वयोग्यगुणान्यगुणानामात्मशब्देनाप्रतीत्यातत्तन्मा
त्रगुणोपासनंयुक्तमित्युक्तमयुक्तं ॥ योग्यानामपिपरमतइत्युक्तदिशालौकिकत्वेनात्म
शब्देनाप्रतीतेरितिशंकनात्संगतिः ॥ इश्वरेगुणाध्येयाइत्युक्तं ॥ तेहिलौकिकाएवध्ये
याउतालौकिकाइतिचिंता ॥ तदर्थं लौकिकानामध्यानेगुणध्यानस्यैवाभावःप्रसज्य
तउतनेति ॥ तदर्थं अलौकिकगुणानामनुभवोनसंभवत्युतसंभवतीति ॥ पूर्वपक्षस्तु ॥

अलौलिकगुणविषयेप्रत्यक्षानुमानयोरप्रसक्तेः प्रसक्तस्य चशब्दस्यसंगतिग्रहणसापेक्ष
त्वात्तस्यचसंबंधिज्ञानाधीनत्वात् ॥ शब्दरूपसंबंधिनःप्रत्यक्षत्वेपि अर्थरूपसंबंधिनः
शब्दादन्येनाप्रतीतेः ॥ शब्दांतरेणतत्प्रतीतौतत्राप्येवमित्यनवस्थापत्त्यासंगतिग्रह
णायोगेन शब्देनाप्यनुभवायोगेन ध्यानकालेतत्प्रतीतेरभावात्तादृशस्यचध्यानायो
गात्॥लौकिकानामध्यानेगुणध्यानस्यैवाभावप्रसक्त्याध्यानसाध्यापरोक्षज्ञानजन्मनो
आभावापातेन गुणध्यानस्यावश्यकत्वाल्लौकिकाएवध्येयाः ॥ तथाचविद्यमानध्यान
स्य नप्रतीकेनहिसइतिचतुर्थाद्यपादेनिरसिष्यमाणत्वेन ईश्वरेध्येयानांगुणानांलौकिक
त्वस्यवास्तवत्वावश्यंभावात्परमतः सेतून्मानेतिसूत्रेभगवद्गुणानामुक्तलौकिकत्वमयु
क्तमिति ॥ सिद्धांतस्तु ॥ अलौकिकास्त्वस्यगुणात्युपास्याइतिश्रुतौमोक्षस्यालौकिक

या० मु.अ
३५ ३।३

त्वकथनात् तादृशमोक्षस्यचालौकिकगुणोपासनेनविनायोगादर्थसामान्यादित्युक्त-
न्यायेन फलानुसारिध्यानस्यकर्तव्यतयालौकिकाएवगुणाध्येयाः नचतादृशगुणाप्र
तीतिदोषः ॥ शास्त्रोक्तवस्तुनश्चैवव्युत्पत्तिः शास्त्रलिंगतइत्यभिमानिनयानुव्याख्या
नसुधयोरुक्तरीत्यायः सहस्राक्षः सइंद्रःयःपाशहस्तःसवरुणइत्यादौवाक्यार्थमर्यादयोप
स्थिते ॥ वस्तुर्नींद्रादिशब्दस्यव्युत्पत्तिवदनुकूलवेदनीयोभगवद्गुणोयःसआनंदइति
साक्षात्कृतेशगुणानांविदुषामुपदेशेनोपस्थितौतत्रतत्पदशक्तिग्रहोपपत्त्याशब्देनैतत्-
प्रतीतिसंभवात् प्रागुक्तगुणानामलौकिकत्वंयुक्तमिति ॥ ११ ॥ ॐ समानएवंचाभे
दात् ॐ ॥ अर्थसामान्यादित्युक्तन्यायेन पूर्वत्रापूर्वकार्याख्यानादपूर्वगुणजातध्यानं
कार्यमित्युक्तमयुक्तं ॥ ध्यानस्यस्वानुसारिफलदत्वनियमादितिशंकनात्संगतिः ॥ १३

अत्रार्थसामान्यादिप्रागुक्तध्यानस्ययथानुसारियुक्तमयुक्तमितिचिंता ॥ तदर्थं ब्रह्मा
णीब्रह्मणोरुपासनस्यस्वसदृशफलानुसारित्वंनास्त्युतास्तीति ॥ तदर्थं तयोःसमविष
मफलवतोरुपासनमपिसमविषमरूपंनसंभवत्युतसंभवतीति ॥ तदर्थं त्रिविक्रमत्वा
दिक्रियाविशेषाणांब्रह्मब्रह्माणीभ्यां यथाक्रममुपास्यानुपास्यत्वेनयुक्तेउतयुक्तइति ॥
पूर्वपक्षस्तु ॥ त्रिविक्रमत्वादिक्रियाविशेषाणामनित्यत्वेनध्यानकाले अभावादविद्य
मानस्यच निंदितत्वेनब्रह्माणीब्रह्मणोरपिक्रियाविशेषानुपासनस्यवाच्यत्वेन गुणवि
षयेसाम्यस्यक्रियाविशेषवैषम्यस्यदुर्वचत्वेनप्रकारांतरेण ब्रह्माणीब्रह्मभ्यांक्रियमाणोपा
सनयोः समत्वस्यविषमत्वस्यचाभावेन समविषमत्वायोगात्तद्द्वत्तरप्राप्यफलस्यस्था
नैक्ययगुणतारतम्यरूपतयासमविषमत्वेन ताभ्यांक्रियमाणोपासनस्यस्वसदृशफलानु

मा० ३६ सारित्वाभावादर्थं सामान्यादित्युक्तमयुक्तमिति ॥ सिद्धांतस्तु ॥ गुणक्रियादयोवि सु.अ. ३।३
ष्णोःस्वरूपंनान्यदिष्यत इतितत्वनिर्णयोदाहृतश्रुत्यागुणक्रियादीनां विष्णुनातादा
त्म्यरूपसंबधेन नित्यतयाध्यानकाले असत्वाभावेनतद्रुपासनैवब्रह्मणोःसद्रुपासनाप्र-
सक्तेः ॥ क्रियादिविशेषाणामलौकिकत्वेपिगुणास्त्रैविक्रमाद्याश्चसंहर्तव्यानसंशयः ॥
विरिंचस्यैवनान्येषामितिस्मृत्या विरिंचस्यैवयोग्यत्वेनतेषांब्रह्मोपास्यत्ववत् ॥
ब्रह्माण्यानित्यविक्रांत्यादिक्रियांतर्भावेनैवोपास्यतयापृथगुपास्यत्वाभावेन क्रियावि
षयेविषमत्वस्यगुणादिविषयेसमत्वस्यचसंभवेन ब्रह्माणीब्रह्मभ्यांक्रियमाणोपासन
स्यापिफलस्यैव समाविषमत्वेनक्काप्युपासनेफलानुसारित्वस्यव्यभिचाराभावादर्थसा १३६
मान्यादित्युक्तंयुक्तमिति ॥ १२ ॥ ॐ नवाविशेषात् ॐ ॥ आत्मेत्येवोपासी

तेत्यात्मपदोक्तगुणोपासनस्यावश्यकत्वादात्मपदेनच ब्रह्माण्यभिमतगुणेभ्योन्यूनगु
णोक्तेरपिसंभवेन सर्वगुणानांक्रियासामान्यस्यचउक्तनियमाभावात् ब्रह्माण्याःप्रागुक्तं
सर्वगुणोपसंहारंक्रियासामान्यस्योपसंहारश्चायुक्तइतिशंकनात्संगतिः ॥ अत्रात्मश
ब्दस्यात्मशब्दाच्चेत्यत्रोक्तमनुपसंहारमात्रत्वंनयुक्तमुतयुक्तमितिर्चिता ॥ तदर्थमात्म
शब्दोक्तागुणानसर्वोपास्याउतसर्वोपास्याइति ॥ तदर्थं तस्यगुणाभिधायकत्वेपिअ
धिकारिणंप्रतितत्तद्योग्यगुणाभिधायकत्वमपिप्रागुक्तंनयुक्तमुतयुक्तमिति ॥ तदर्थं
तत्तदुपासनायोग्यगुणमात्राभिधायकत्वानियमोनसंभवत्युतसंभवतीति॥पूर्वपक्षस्तु॥
आत्मशब्दोब्रह्माणंप्रतिसर्वानीश्वरेधर्मान् ब्रह्माणींप्रतिअशेषगुणान् क्रियासामान्या
निअन्यांश्चप्रतितद्वुपासनायोग्यगुणानेव तन्न्यूनाधिकान्वक्तीतिप्रातिश्विकनियमा-

भावेन प्रागुक्ततत्तदधिकारियोग्यगुणाभिधायकत्वस्यान्वयादित्यत्रोक्तस्यायोगात्-
नसर्वोपास्या आत्मशब्दोक्तागुणाइत्यनुपसंहारमात्रत्वमात्मशब्दाच्चेत्यत्रोक्तमयुक्तमि
ति ॥ सिद्धांतस्तु ॥ आत्मशब्दस्यसर्वगुणोक्तगतस्यापितत्तद्योग्यगुणप्रत्यायकत्वा
न्न्यूनाधिकसंभवेपितत्तदधिकारिसामर्थ्यवशेन आत्मशब्देनयस्ययावंतोगुणाःप्रती
यंतेतत्रतावंतोध्येयाइतिव्यवस्थासंभवात् सर्वान्गुणानितिभाष्योक्तश्रुतिबलाच्चात्म
शब्दोक्तागुणाः सर्वोपास्याएवेतियुक्तमनुपसंहारमात्रत्वमिति ॥ १३ ॥ ॐ संभृति
द्युव्याप्त्यपिचातः ॐ ॥अत्रउक्षासद्यावापृथिवीबिभर्तिएषहिसर्वेषुलोकेषुभातीतिश्रुत
संभृत्यादिगुणस्यसर्वोपास्यत्वशंकयाप्रागुक्ताधिकारिविशेषणसिद्धांतकरणात्संगतिः॥
अत्रानंदादयइत्यत्रोक्तंचतुर्गुणोपासनंनयुक्तमुतयुक्तमितिचिंता ॥ तदर्थं संभृतिद्युव्या



प्तीसर्वोपास्येउतनेति ॥ तदर्थं गुणोपास्तौतज्जन्यफलापेक्षैवहेतुरुतयोग्यताविशे
षोपीति ॥ पूर्वपक्षस्तु ॥ सर्वेषांमुमुक्षूणांमोक्षेज्ञानानंदादेरिवस्वावरसंभरणस्यप्रका
शव्याप्तेरपेक्षितत्वात्फलापेक्षायाएवचतत्साधनानुष्ठानेनियामकत्वाद्योग्यताविशेष-
स्यहेतुत्वेवासर्वेषामपियोग्यताविशेषस्यसत्वेपि विरोधाभावात्तदभावेवासाधनानुष्ठा
नेन तदनुगुणफलप्राप्तावपिविरोधाच्च अपेक्षितसंभरणादिफलस्ययादृशोभावितःश्री
शस्तादृशोजीवआभवेदितिस्मृत्याअर्थसामान्यादित्युक्तन्यायेन संभृत्यादिगुणविशि
ष्टतयाभगवदुपासनेनैवप्राप्यत्वाच्चसर्वोपास्येएवसंभृतिद्युव्याप्ती॥ नचैवंसर्वगुणापीति-
शक्यं॥ सर्वेषांसर्वगुणापेक्षाभावात्अतोनयुक्तं॥सर्वेषांचत्वारएवगुणाउपास्याइति॥
सिद्धांतस्तु ॥ फलापेक्षायाएवतत्साधनानुष्ठानेनियामकत्वेत्रैवर्णिकेतरेषामपिस्वर्गहे

तुयागाद्यनुष्ठानात्फलप्राप्ति प्रसंगेनान्यथानर्थकृद्भवेदितिभाष्योक्तस्मृतावयोग्यानुष्ठान
स्यानर्थफलत्वोक्त्याचयोग्यताविशेषस्यैव नियामकत्वात्तस्यचदेवादीनामुपास्यास्तु
भृतिव्याप्त्याद्योगुणा इतिस्मृत्यादेवादीनामेवभावेनसर्वेषांमभावात् नसर्वोपास्ये
संभृतिद्युव्याप्तीकिंतुदेवोपास्येइतियुक्तंप्रागुक्तं चतुर्गुणोपासनंअपेक्षितं ॥ प्रकाशा
दिमात्रंतुभगवद्रूपप्रतीत्यविनाभूतप्रकाशादिनैवलभ्यमिति ॥ १४ ॥ ॐ पुरुषवि
द्यायामपिचेतरेषामनाम्नानात् ॐ ॥ एवमियताग्रंथेनसुरनाविरिंचिरूपमध्यमाधमो
त्तमाधिकारिणांब्रह्मलपसर्वगुणध्यानायत्रिविधैरपिस्वस्वयोग्यगुणाइतस्तत उपसंहा
र्याइतियत्प्रसिद्धंतदयुक्तं ॥ एकैकत्रैवविद्यासुतत्तद्योग्यगुणोक्तिसंभवादितिशंकनात्सं
गतिः ॥ अत्रसर्ववेदांतनयेत्रिविधाधिकारिणांयथाशक्तियत्सर्वपरिज्ञानमुक्तंतदयुक्त

सुतयुक्तमितिर्चिंता ॥ तदर्थं तेषांस्वस्वयोग्यगुणानामुपासनायतइतस्ततोनोपसं
हार्याउतोपसंहार्याइति ॥ तदर्थं स्वस्वयोग्यगुणाएकैकत्रविद्यायामाम्नायंते
अथनेति ॥ तदर्थमेकैकत्रतत्तद्योग्यगुणानामनुक्तिज्ञापकंनास्त्युतास्तीति ॥ पूर्वप
क्षस्तु ॥ एकैकत्रतत्तद्योग्यगुणानोच्यंतइत्यत्रज्ञापकाभावेन एकैकत्रैवतत्तदपेक्षितगु
णोक्तिसंभवेन तन्मात्रपरिज्ञानेनापिस्वस्वयोग्यध्यानेविषयगुणानांबुध्यारूढसंभवेन
इतस्ततोध्येयपुंगुणाउपसंहार्याइतित्रयाणां यथाशक्तिसर्वपरिज्ञानंयुक्तमिति ॥
॥ सिद्धांतस्तु ॥ सर्वतःपौरुषेसूक्तइतिभाष्योक्तस्मृत्या सर्वविद्योत्तमपुरुषसूक्तविद्या
यामपि केषांचिदेवगुणानांमेवपठितत्वेनान्यविद्यासु सर्वगुणपाठाभावस्य कैमुत्यसि
२४ द्धत्वेन उत्तमाधिकारिणां सर्वतोगुणोपसंहारस्यावश्यकत्वान्मध्यमाधिकारिणामपि

महदल्पगुणाभिधायकविद्यासुसंख्यासाम्यसंभवेपि स्वस्वाभिमतगुणानामेकैकत्रैवो
क्तिनियमाभावादितस्ततःकार्यएवोपसंहारइतियुक्तंसर्वेषांयथाशक्तिसर्वपरिज्ञानमि-
ति ॥ १५ ॥ ॐ वेधाद्यर्थभेदात् ॐ ॥ पूर्वत्रइतस्ततोपेक्षितगुणोपसंहारस्य सर्वैः
कर्तव्यत्वप्रसक्तौसत्यां वेधादिगुणोपसंहारोप्यपेक्षितफलहेतुत्वात्सर्वैःकार्यइतिशंक-
नात्संगतिः ॥ अत्रानंदायइत्यत्रोक्तःपूर्वंनयेप्रसक्तःसर्वेषांचतुर्गुणोपास्तिनियमोनयुक्तो
युक्तइतिचिंता ॥ तदर्थं तंप्रत्यंचमर्चिषाविध्यमर्मन्नित्यादिश्रुत्युक्तोवेधादिगुणःकिं
सर्वोपास्योथनेति ॥ तदर्थं तत्फलेपेक्षायोग्यत्वेस्तउतनेति ॥ पूर्वपक्षस्तु ॥ वेधादि
भगवद्गुणोपासनाफलस्यदुष्टनिग्रहस्य सर्वसज्जनानामपेक्षितत्वात् प्राणस्त्वावंशो
भावयतीत्येवंब्रूयात् ॥ आततायिनमायांतंहन्यादेवाविचारयन्निति श्रुतिस्मृत्योर्विहि



तत्वेन योग्यतावत्वस्याप्यवगमाच्च वेधादेःसर्वोपास्यत्वात्प्रागुक्तनियमोनयुक्तइति ॥
सिद्धांतस्तु ॥ भिंधिविद्धिश्रृणीहीतिस्मृतौ वेधादिगुणापेक्षिफलस्य यतिप्राप्यफली
द्विलक्षणफलत्वोक्तिपूर्वं यतीनांतत्रायोग्यत्वस्योक्तत्वात् ॥ ततएवतत्रापेक्षायाअ
प्ययोगात्प्रागुक्तश्रुतेस्तु विष्णुनावंशभूतेनसहितंवायुनासतः ॥ नशक्तोसीतिमामा
त्थहास्यतस्वामतोहितो ॥ कानसामर्थ्यवानित्थंब्रूयाद्देवादिरुत्तमइतिस्मृत्यादेवावि
षयत्वेन स्मृतेश्चक्षत्रियपरत्वेनचसर्वेचसर्वेषांयोग्यत्वानिर्णायकत्वात् योग्यतापेक्षयो
रभावे तन्निबंधनवेधादिगुणोपास्तेरभावसिद्धेर्युक्तःप्रागुक्तनियमइति ॥ १६ ॥ ॐ
हानौतूपायनशब्दशेषत्वात्कुशाच्छंदःस्तुत्युपगानवत्तदुक्तं ॐ ॥ एवमतीतैर्नयैस्त्रिवि
धाधिकारिणामुपासनोपयुक्ततत्तद्योग्यगुणोपसंहारोनिर्णीतः ॥ इतःपरंउपासानायाः

मा० फलनैयत्ययोग्यतातारतम्याधिकारीयत्ता गुरुप्रदानादीतिकर्तव्यतादिकंनिरूपयितु- मु.अ.
४० मन्त्रोपासनायानिरुपाधिकत्वरूपस्वभावउच्यतइतिसंगतिः ॥ यदर्थं पूर्वंगुणोपसं ३।३
हारोनिर्णीतःयस्माद्वार्थसामान्यादित्युक्तस्वसादृशफलत्वंसमानएवंचेत्यत्रसमर्पितं-
साउपासना मुक्तेननक्रियतउतक्रियतइतिचिंता ॥ तदर्थं मुक्तेनक्रियतइत्यत्रप्रमाणं
नास्त्युतास्तीति ॥ तदर्थं एतत्सामगायन्नास्तइतिश्रुतिःगौणमुक्तिपरोतपरममुक्ति
परेति ॥ तथाक्रियतइत्यत्रापिकिंविध्याद्युपाधिनाक्रियते ॥ कुशाछंदस्तुत्युपगानव
दीश्वरक्रियावत्स्वेच्छयालीलारूपतयेतिचिंता ॥ तदर्थं उपासनाविधीनांमुक्तेपि
प्रवृत्तिरस्त्युतनेति ॥ तदर्थं मुक्तौप्राप्तव्यफलमस्त्युतनेति ॥ मुक्तस्यनिष्क्रियत्वेन
सामगायनादिक्रियायायोगेन एतत्सामगायन्नित्यादेर्गौणमुक्तिपरत्वेन मुक्ताउपासना १४०

स्तित्वेमानाभावात् ॥ नचाफलस्य करणायोगेन सफलत्वोपगमेःपूर्णताप्रसंगेनच
मुक्तेनोपासनाक्रियतइतिप्राप्ते सयएवंविदस्माल्लोकात्प्रत्येतिपूर्ववाक्ये ब्रह्मज्ञानीन
श्वरमदेहत्यागमुत्का पश्चादानंदमयन्यायेनानंदमयादिभगवद्रूपपंचकप्राप्तमेतमन्नम
यमात्मानमुपसंमेत्यादिनोत्का म्नातस्यएतत्सामेतिवाक्यस्य गौणमुक्तिपरत्वा
योगेन परममुक्तिपरत्वेनप्रमाणसद्भावात् कृष्णोमुक्तैरिज्यतइतिमुक्तस्य यजनादि
क्रियासत्वेन कैमुत्यन्यायाच्चमुक्तेनोपासनंक्रियतएवेतिसिद्धांतइत्याद्यःपक्षः ॥ द्विती
यस्तुविधीनामिष्टसाधनत्वं ॥ तद्बोधकाश्चोपासीतेत्यादिविधिप्रत्ययार्थाः ॥ तेब्र
ह्मविदाप्नोतिपरमिति ब्रह्मज्ञानेनमोक्षोभवतीत्युक्ते तत्कथमित्यपेक्षायां तादर्थ्येप्रवृत्ता
अपियथाबद्धाप्रत्युपासनंमोक्षरूपेष्टसाधनमितिप्रत्यापयंति ॥ एवंमुक्तंप्रत्यपिआनं

दातिशयस्य प्राचीनकर्मफलत्वस्याग्निहोत्रादितुतत्कार्यायैवेतिवक्ष्यमाणत्वेन तत्सा
धनत्वबोधनासंभवेपि मुक्तौतदातदाप्राप्तानिष्टपरिहाररूपफलस्येष्टसंभवेन तत्साध
नताबोधकत्वसंभवेन मुक्तेपिप्रवृत्तिरस्ति ॥ अन्यथातत्कृतेरेवायोगात् ॥ अतोवि
धिफलकामनाद्युपाधिनैवउपासनाक्रियतइतिप्राप्ते तीर्णोहितदासर्वान्शोकान् हृद
यस्यभवतीत्यादेर्मुक्तौसर्वानिष्टपरिहारस्यसिद्धत्वेन प्राप्तव्यानिष्टपरिहारस्याप्यभा-
वेनैव तत्साधनत्वमादायापीष्टसाधनत्वमुपासनस्यमुक्तंप्रतिबोधयितुमशक्यत्वेन
बंधेनमुक्तस्यसमानधर्मतापत्याच मुक्तेमुक्तउपासनाविधीनामप्रवृत्तेः ॥ विधिफल
कामनयोरभावेपि नियतब्रह्मयज्ञानंतरंकुशैःस्वेछयाद्विजानां मंत्रसामाध्येयवदीश्वर
वच्चस्वेच्छयोपसंतेपरमितिसिद्धांतइति ॥ अत्रप्रयोजनं पूर्वपादोक्तभक्त्याक्षेपस

माधी ॥ अत्राद्यमधिकरणशरीरंभाष्येएतत्सामगायन्नास्तइतिश्रुत्युक्तया भवेदियं
चिंता ॥ यदिमुक्तस्योपासनमेवस्यात्तदेवक्तुतइतिटीकाया मुक्ताउपासनाभावे फला
दिकमपिस्यादितिन्यायविवरणेनसूचितं ॥ द्वितीयंतु मुक्तस्योपासनाकर्तव्यानवे
त्यादिभाष्यादिनेतिज्ञेयं ॥ टीकायांतु भाष्यविवरणयोरेकवाक्यतासंपादनाय व्या
मिश्रेणनिरूपणंकृतमित्यविरोधः ॥ यद्वामुक्तेनोपास्तिर्नक्रियतेक्रियतेवेतिचिंता ॥
तदर्थं मुक्ताद्युपास्तिभावे साधकंनास्त्यथविपरीतमिति ॥ तदर्थं मुक्तस्यविधिविषय
त्वादिबाधकंभवत्युतनेति ॥ पूर्वपक्षस्तु ॥ मुक्तस्योपासनावत्वे मानाभावेन विधिब
द्धत्वेनवा तदबद्धत्वेनवा उभयथाप्युपासनाभावे फलप्राप्तया अपूर्णताप्रसंगेन आद्ये
संसारिसमानधर्मापत्या अंत्येअविहितकरणस्यैवायोगेन बाधकेन मुक्तेनोपासनान

।० क्रियतइति ॥ सिद्धांतस्तु ॥ एतत्सामगायन्नित्यादिसाधकभावेन उपासनाविधीनां मु.अ.
५२ मोक्षेवाक्यशेषतयामुक्त्यर्थत्वेन मुक्तस्यतदविषयत्वेपि कुशाछंदस्तुत्युपगानवत्स्वेच्छ ३।३
यैवातदवृद्धेःप्राचीननिवृत्तकर्मफलत्वेन सर्वानिष्टनिवृतेःप्राप्तत्वेन प्राप्यफलाभावेपि
ईश्वरक्रियावन्मुक्तस्यलीलात्वेनोपासनाक्रियायाःस्वभावोपत्तेः बाधकाभावेनच मुक्ते
नोपासनाक्रियतइत्येकरूपेणैवपूर्वोत्तरपक्षौध्येयौ ॥ १७ ॥ ॐ छंदतउभयाविरो
धात् ॐ ॥ उपासनाप्रसंगसन्निधार्पितंकर्माप्युपासनवन्मुक्तौनियतमेवेतिशंकनात्सं
गतिः ॥ पूर्वत्रप्रकृतामुक्ताः किमुपासनवन्नियमेनकर्मकुर्वंत्युतनेतिचिंता ॥ तदर्थं
नियमेन तदनुष्ठापकस्त्युतनेति ॥ तदर्थं शक्तत्वाद्येवानुष्ठापकमुताविध्यादिवत्वमपी
ति ॥ पूर्वपक्षस्तु ॥ साधनानुष्ठानेहि तज्जन्यफलार्थित्वेसतिशक्तत्वंप्रयोजकं ॥ १४

मुक्तानांचप्राप्तफलत्वेनार्थित्वाभावेपि सिद्धवैदूष्याणांस्वेच्छयोपासनानुष्ठानवत् कर्म
करणेपिशक्तिसद्भावात्कर्मणोभगवत्पूजारूपत्वाच्चानुष्ठापसद्भावात्कर्मापि नियमेनकुर्वं
त्येव ॥ अन्येषांतस्यानननुष्ठापकत्वे उपासनमपिनियमेन नकुर्युःअविशेषादिति ॥
सिद्धांतस्तु ॥ कर्मणोभगवत्पूजात्मकत्वेपि मुक्तानांतदनुष्ठानशक्तत्वेपि नतावन्मात्रं
नियमेनानुष्ठानेहेतुः ॥ किंतुविहितत्वमकरणेप्रत्यवायवत्वंअप्राप्तफलत्वंच ॥ तत्रैत
त्सर्वंमुक्तानामपिमोक्षस्यापुमर्थत्वप्रसंगेन विध्यादेरभावात्प्राप्तफलत्वाच्चतेषां ॥ अतो
नियमेनकर्मकुर्वंति किंतुभगवत्पूजात्वात्पूर्वानुष्ठानवासनाफलाच्चकदाचिदेवकुर्वंति ॥
उपासनंतु पूर्वंनियमेनानारतमनुष्ठानेन तद्वासनाफलान्नित्यज्ञानस्वरूपाच्चनियमेनानु
तिष्ठंति ॥ कदाचित्कर्मकुर्वंतिकदाचिन्नैवकुर्वते ॥ नित्यज्ञानस्वरूपत्वान्नित्यंध्यायंति

केशवमित्यादिस्मृतेरिति ॥ १८ ॥ ॐ अनियमःसर्वेषामविरोधाच्छब्दानुमानाभ्याम्
ॐ ॥ पूर्वज्ञानद्वाराकर्मफलस्यमोक्षस्य प्राप्तत्वान्नकर्मानुष्ठाननैय्यत्यमित्युक्तौतर्हिज्ञा
निनांसर्वेषां फलप्राप्तिरुतकेषांचिदेवेतिचिंतनात्संगतिः ॥ यद्वोपासनाविधीनां ज्ञान
द्वारामोक्षत्वंवाक्यशेषत्वमुपादायनशब्दशेषत्वादित्यत्रउक्तमयुक्तं ॥ सत्यपिज्ञानेके
षांचिन्मोक्षाभावादित्याशयेनात्रशंकनात्संगतिः ॥ पूर्वनयस्यतुप्रासंगिकत्वात्नव्यव
धायकत्वतल्लक्षणार्थोपलब्धेरित्यादौपूर्वतत्पदेन प्रकृतोमोक्षः ॥ किंकेषांचिदेवज्ञानि
नांप्राप्यउतसर्वेषांज्ञानिनामितिचिंता ॥ तदर्थं ज्ञानिष्वप्युपासनेयोग्यायोग्यविचारो
स्त्युतनेति ॥ तदर्थं ज्ञानिष्वपियोग्यायोग्यविभागाभावे ज्ञापकंनास्त्युतास्तीति ॥
पूर्वपक्षस्तु ॥ केषांचिदेवज्ञानिनांमोक्षोनसर्वेषां ॥ ज्ञानिष्वपिकेषुचिदयोग्यत्वसंभ
वात् ॥ कामंभवेमवृजिनैर्निरयेषुनष्टाचेतोलिवद्यर्हितेपदयोरमेतेतितृतीयस्कंधकुमा
रोक्तेः ॥ अयोग्यानांच मोक्षस्योपासकेष्वयोग्यानांसर्वगुणोपसंहारस्यैवाप्राप्यत्वात् ॥
नचोपासकेषुसर्वगुणोपसंहारायोग्यजनवत् ज्ञानिषुमुक्तयोग्यजनोनास्त्येव ॥ प्रागुक्त
कुमारोक्तिस्तुभगवत्पादरतिःस्तुतिपरेतिवाच्यं ॥ सर्वगुणोपसंहारयोग्यायोग्यविभा
गोस्तिज्ञानिषुनास्तीत्यत्रज्ञापकाभावादिति ॥ सिद्धांतस्तु ॥ सर्वेषामेवज्ञानिनांमोक्षो
नकेषांचिदेवेतिनियमः सर्वैर्गुणैर्ब्रह्मणैवत्ह्युपास्योनान्यैरितिनिषेधवत्केनोपसंहारेयो-
ग्यायोग्यविभागसत्वेपीहज्ञानिषुकेषांचिन्मुक्तिनिषेधाभावेन प्रत्युतनकश्चिद्ब्रह्मविस्सृ
तिमनुभवतिमुक्तोप्येषभवतीतिसर्वज्ञानिनांमुक्तिनैयत्यवचनेनाविमताज्ञानिनोनियत
मोक्षः ज्ञानित्वात्संमतज्ञानिवदिति निर्बाधश्रुतिमूलानुमानेनच ज्ञानिष्वयोग्याभाव

या० निश्चयात्सर्वंज्ञानिप्राप्योमोक्षइतितत्साधनोपासनं निःशंकंकार्यमेव ॥ युक्तंचोपायन मु.अ
४४ शेषत्वंतद्धिर्धीनामिति ॥ १९ ॥ ॐ यावदधिकारमवस्थितिराधिकारिकाणां ॐ ॥ ३।३
यद्येवमनियमेनज्ञानिनां मोक्षस्तर्हिआर्किंचित्करोसौयोग्यताविशेषः नतत्प्रयोजकफल
तारतम्यस्यान्यनैवोपपत्तेरिति पूर्वोक्ततर्कप्रतिहतशंकनात्संगतिः ॥ येषामुपासका
नां ज्ञानप्राप्तौसत्यां मोक्षनैय्यत्यप्रागुक्तं ॥ तदुपासकाःकिंयोग्यतारतम्यवंतोनतद्वंतइ
तिचिंता ॥ तदर्थं तत्रप्रमाणंनास्त्युतास्तीति ॥ तदर्थं मुक्तावानंदादितारतम्यंकिमु
पासनादिप्रयत्नतारतम्येनैवोपपन्नंउतयोग्यतातारतम्येनैवेति ॥ तथामुक्तावानंदता
रतम्ये साधकंनास्तिबाधकंचास्तिअथविपरीतमिति ॥ पूर्वपक्षस्तु ॥ वृद्धिर्ह्रासभाक्
मितिनये दर्शनाच्चेतिगुणसूत्रोपपत्ताया।अथातआनंदस्यमीमांसाभवतीत्यादिश्रुतेः—

संसारिपरत्वेनमुक्तावानंदतारतम्ये मानाभावात् द्वेषेर्ष्यादिप्रसंगरूपबाधकाच्च मुक्तौ
तारतम्यमेवायुक्तंचेदपिकृष्यादिप्रयत्नतारम्येन धान्यादिफलतारतम्यवदुपासनादि
प्रयत्नतारतम्येनैवोपपद्यतइति तस्ययोग्यतातारतम्यप्रयोजकत्वेन प्रमाणाभा
वान्नोपासकाःयोग्यतातारतम्यवंतइति ॥ सिद्धांतस्तु ॥ नानाविधादेवसंघाविमुक्ता
इत्यादिविशेषश्रुत्या नरादिब्रह्मपर्यंतंविमुक्तानांशतोच्छ्रयः ॥ अप्यानंदेमिथोप्युक्त
स्त्वध्वर्यूणांश्रुतौपृथगितिस्मृत्याचानंदश्रुतेरमुक्तविषयत्वायोगेन मुक्तौतारतम्यप्रमा
णाभावातविषयलंपटत्वमत्सरादिदोषित्वानुपकारित्वानामेवलोकेद्वेषेर्ष्यादिप्रयोज्य-
त्वस्यासमंतत्वस्य गुरुशिष्यादौद्वेषेर्ष्यादिप्रयोज्यत्वस्यचदुष्टत्वेन द्वेषेर्ष्यादिनिमित्त
२५ विषयलंपटत्वादेःब्रह्मज्ञानितया मुक्तेष्वभावादुत्तमेधमानांज्ञानादिलक्षणोपकारभावे

नानुपकारित्वाभावाद्बाधकाभावाच्च नयुक्तमेवमुक्तौतारतम्यं तत्तुप्राचीनयोग्यताता
रम्येनविनाऽनुपद्यमानंयोग्यतातारतम्यंगमयेत् ॥ नचोपासनादिप्रयत्नतारतम्येनान्य
थोपपत्तिः ॥ स्वाधिकाराधिकोयत्नःप्रायशोनोपपद्यते ॥ कथंचिदधिकेयत्नेदोषः
कश्चित्समापतेदितिवचनेन प्रयत्नतारतम्यस्यापियोग्यतातारतम्य निबंधनत्वात् ॥
अतोयोग्यतातारतम्यवंतएवोपासकाइति ॥ फलंतुप्राप्तेश्चेत्यत्रोक्तयोग्यताभेदसमर्थनं
॥ २० ॥ ॐ इयदामननात् ॐ ॥ प्रागुक्तयोग्यतानियमस्यनिरवधिकत्वमाशंक्य
सावधिकत्वरूपविशेषचिंतनात्संगतिः ॥ छांदोग्येसप्तमे नामनोवाङ्मनःसंकल्पाचित्त
ध्यानाविज्ञानबलान्नाप्तेजआकाशस्मराशाप्राणशब्दिता उषास्वाहापर्जन्यामित्राग्निवरु
णविद्युतप्रवहानिरुद्धाहंकारिकप्राणेंद्रोमारुद्रवाणीमारुतांतदेवता उत्तरोत्तरमाधिक्य

नोक्ताः ॥ पूर्वत्राधिकारिपदेन प्रकृतास्तेऽपासनाधिकारत्वंतः किंमुख्यप्राणावधि
कानभवंति उततदवधिकाएवेतिचिंता ॥ तदर्थं प्राणादधिकाधिकारिसाधकम
नुमानं प्राणोवावसर्वेभ्योभूयान्नप्राणाद्भूयानितिश्रुतिबाधितंनभवत्युतभवतीति ॥
तदर्थं श्रुतौसर्वशब्दःकिंपरमात्मान्यपरइतिबाधिकार्यंतरान्यपरतयापिसंकुचद्वृत्तिः—
संभवत्युतनेतिः ॥ पूर्वपक्षस्तु ॥ प्राणोवावसर्वेभ्यइत्यत्रसर्वशब्दस्यासंकुचद्वृत्तित्वे
मुख्यप्राणस्य निरूपचरितसर्वोत्तमत्वप्राप्त्यासर्वोत्तमवस्तुद्वयायोगेन श्रुत्यादिसिद्धस
र्वोत्तमताकविष्णवभेदवाच्ये चक्षुरादिवन्नित्यादौभाष्योक्तानेकमानसिद्धप्राणपरमा
त्मभेदाभावप्रसंगबाधकेन तदनन्यपरत्वेन संकुचद्वृत्तित्वे वश्यंवाच्यत्वेऽधिकारिवि
शेषव्यतिरिक्तपरत्वेनापिसंकोचे बाधकाभावात् ॥ तथाचतस्याश्रुतेःप्राणःसर्वोत्तमो

धिकारियुक्तोधिकारित्वाद्गुमादिवदित्यनुमानबाधकत्वेन तदबाधितादस्मादनुमाना 
त्प्राणादप्युत्तमाधिकारिसिद्धेरुपासनाधिकारिणोन मुख्यप्राणावधिकाइति ॥ सिद्धां 
तस्तु ॥ सर्वशब्दस्यानेकमानबलेन भगवदन्यत्रनसंकुचद्वृत्तित्वेपि चक्षुरादिवत्वि
त्यादौ तत्रतत्रभाष्योक्तवचनैः उत्तमत्वंहिदेवानामित्यादिवक्ष्यमाणभाष्यवचनैश्च
प्राणाद्धरेरेवोत्तमत्वंप्रतिपादनपरैस्तदनुसारिण्याभगवन्मात्रव्यतिरिक्तपरत्वेन संकुच
द्वृत्तिकसर्वशब्दोपेतप्रागुक्तश्रुत्याच बाधितत्वेनानुमानस्याप्रमाणत्वात्प्राणावधि
काएवोपासकाइति ॥ फलंतुसर्वगुणोपसंहारस्य ब्रह्माधिकारिकत्वोक्तिसमर्थनं ॥२१॥
ॐ व्यतिहारोविशिंषंतिहीतरवत ॐ ॥ पूर्वत्रप्राणस्यैवहिरण्यगर्भत्वात्तस्यप्रागुक्तः
सर्वगुणोपसंहारोयुक्तइत्युक्तमयुक्तं ॥ तस्यैवसर्वोत्तमत्वेनान्यस्यतद्गुपास्यस्याभावाद 

तिशंकनाद्धाउपासनाधिकारिणोनिरूप्योपास्यमिहनिरूप्यतइतिवासंगतिः॥पूर्वत्रप्रा
णादुत्तमत्वेन प्रकृतोविष्णुः किंप्राणान्नोत्तमोथउत्तमइतिचिंता ॥ तदर्थं छांदोग्येप्राणो
वाआशायाभूयानित्याम्नातात्प्राणात्तदुपरिसत्यंत्वेवविजिज्ञासितव्यइत्याम्नातःस-
र्वोत्तमःसत्यनामकःकिंप्राणादनन्यउतान्योविष्णुरितिर्चिता ॥ तदर्थं प्राणप्रकरणात्स
त्यप्रकरणस्यभेदकंनास्त्युतास्तीति ॥ पूर्वपक्षस्तु ॥ नामादिप्राणपर्यंतानां पंचदशप्र
करणानांभेदकस्य प्रश्नप्रतिवचनभावस्येवेहअस्तिप्राणाद्भूयइतिप्रश्नस्य सत्यंवावप्रा
णाद्भूयइतिप्रतिवचनस्य प्राणसत्यप्रकरणभेदस्याभावेन प्राणसत्ययोरनन्यत्वान्नस
त्यशब्दार्थभूतःसन्नविष्णुःप्राणउत्तमः ॥ नचप्रकरणभेदयोःप्रश्नप्रतिवचनयोरध्या
तारः ज्ञापकाभावादिति ॥ सिद्धांतस्तु ॥ सवाएषएवंपश्यन्नेवंमन्वानएवंविद्वानति

वादीति प्राणवाचिनोतिशयितवस्तुवाचित्वेनातिवादित्वमुक्त्वापश्चातएषतुवाअतिव
दतियःसत्येनातिवदतीसत्यस्यवस्तुवदतोप्यतिवादित्वोक्त्याप्राणातिवादिनोपिस-
त्यातिवादिनस्तुशब्देन व्यावर्तनात्तज्ज्ञापकात्प्रश्नप्रतिवचनयोरध्याहारेण प्रकरणवि
च्छेदात् उत्तमत्वंहिदेवानामितिस्मृतेश्च सत्यनामाविष्णुःप्राणादुत्तमइतितुशब्देना
ध्याहारकल्पकोविज्ञानंत्वेधमस्त्वित्यादौवक्ष्यमाणदिशाभेदहीनेपिवस्तुनिश्रवणेनव्य
भिचारादितिचोद्यंतु मनर्थेनिरस्तं॥निरासप्रकारश्चचंद्रिकायांव्यक्तः॥ फलत्वानंदायइ
त्यत्रोक्तात्मत्वोपासनसमर्थनं ॥ २२॥ ॐ सैवहिसत्यादयः ॐ ॥ अत्रप्रागुक्तेविष्णोः
प्राणादुत्तमत्वे विशेषचिंतनात्संगतिः ॥प्रकृतात्प्राणात् सत्यपदोक्तोविष्णुरेवोत्तमोबह
वोप्युत्तमाःसंतीतिचिंता॥तदर्थं सत्यस्योपरिपठितानांविज्ञानमतिसंज्ञानिष्ठाकृतिसुख

भूमानाहंकारात्मनांकिंसत्यात्परस्परंचभेदउतभेदइति॥तदर्थं अभेदेज्ञापकंनास्त्युता
स्तीति ॥ पूर्वपक्षस्तु ॥ सत्यादीनामात्मांतानामभेदज्ञापकाभावाछंदांतरन्यायेनभे
दस्यैवन्याय्यत्वात्प्राणात्सत्यादयोबहवउत्तमाइति ॥ सिद्धांतस्तु ॥ विज्ञानादेःसत्या
दितोन्यत्वेसत्यंभगवोविजिज्ञासइत्यादिप्रश्ने विज्ञानादेरुक्तेरसंगत्यापत्तेस्तदन्यथानुप
पत्तिवचनेसत्यंभगवोविजिज्ञासइत्यस्य सत्यगुणजिज्ञासापरत्वेसति सत्यादिनाभूत
विज्ञानोक्तेः ॥ एवंविज्ञानंभगवोविजिज्ञासइत्यत्रापिविज्ञानगुणजिज्ञासायां तदविना
भूतमत्युक्तिरित्येवं पूर्वपूर्वगुणजिज्ञासायामुत्तरोत्तरस्य तदविनाभूतगुणोक्तिपरत्वेन
सर्वेषामभेदस्यन्यायप्राप्तत्वात् सत्याद्याअहमात्मांतायद्गुणाइत्यादिस्मृतेश्च तेषामभे
दाद्विष्णुरेवप्राणादुत्तमइति ॥२३॥ ॐ कामादितरत्रतत्रचायतनादिभ्यः ॐ॥ एवं

 सत्यादेःसर्वस्याविष्णुत्वोक्तौश्रियोप्यधिकारित्वात्प्राणादूर्ध्वंश्रियोप्यध्याहारःस्यात् ॥ तथाच प्राणावधित्वमाधिकारिवर्गस्योक्तमयुक्तमितिशंकनात्संगतिः ॥ अत्रप्राण विष्णुसंन्निधापिताश्रीःकिमुपासनायामधिकारिण्यथनेतिचिंता ॥ तदर्थं साबत्धाट तनेति ॥ तदर्थं सीतादिरूपेणभूमौभवनादिकंजीववद्देहयोगादिरूपजन्माद्येवोत प्रादुर्भावादिरूपमिति ॥ तदर्थं श्रियोभगवदर्चनं जन्मादिहेतुकर्मादिबंधमोचननिमि तमुतमुक्तवन्निरुपाधिकव्यक्त्यतिशयानिमित्तमिति ॥ तदर्थं भक्तिनिमित्तत्वकल्पकं नास्त्युतास्तीति ॥ पूर्वपक्षस्तु ॥ यदर्चितंब्रह्मभवादिभिःसुरैःश्रियश्चदेव्यामुनिभिश्चसा त्वतैरित्यादौ श्रियोपिभगवदुपासनाश्रूयते ॥ साचइतरेषामिवभगवत्प्रीतिद्वाराबंध मोचनार्था ॥ तस्याःकृतकृत्यत्वे तदयोगात् भक्त्यतिशयनिमित्तत्वे कल्पकाभा 

वात् ॥ अन्यथासात्वतप्रभृतीनामपि सातदर्थानस्यात् ॥ एवंचतद्बलात्सीतारु
ग्मिण्यादिरूपेण भवनतिरोधानादेःकर्माधीनदेहोपादानत्यागरूपत्वेनेतरजीववद्ब
द्धत्वावगमाद्बद्धत्वेसतिसाधुत्वाच्चाधिकारिण्येवोपासनायांश्रीरिति ॥ सिद्धांतस्तु ॥
सर्वायतनेत्यादिभाष्योक्तिश्रुत्यादिबलेन नित्यंभगवत्संबंधित्वेनातिशयितप्रसादान
न्यमुक्तत्वावगमात्तद्बलेन भूमौभवनादेःईशेच्छाधीनस्वेच्छामात्रहेतुकतया प्रादुर्भा
वरूपत्वेन कर्माधीनदेहयोगादिरूपत्वाभावावगमेन यथाश्रीर्नित्यमुक्तापीतिस्मृ
त्याचार्चनस्यभक्त्यातिशयानिमितत्वकल्पनान्नाधिकारिणीश्रीरिति ॥ फलंतुउपास
कानां प्राणावधित्वसमर्थनं ॥ २४ ॥ ॐ तन्निर्धारणार्थनियमस्तद्दृष्टेःपृथग्ध्यप्रति
बंधःफलं ॐ ॥ पूर्वत्रश्रियःकृतार्थतयाफलाभावेप्यादरादुपासनालोपोक्तौतत्र्प्रकृता

॥० र्थानांफलाभावाच्छ्रवणादिसमस्तोपासनस्यलोपएवस्यादितिशंकनात्संगतिः ॥ अत्र मु.अ.
४९ श्रवणमननध्यानरूपत्रिविधमुपासनंव्यस्तंकार्यमुतसमस्तमितिर्चिंता ॥ तदर्थं ३।३
त्रिविधस्यापिफलंनास्त्युतास्तीति ॥ तदर्थं दर्शनंकिंत्रितयान्यतमसाध्यमुतत्रितय
साध्यमिति ॥ तदर्थं त्रितयस्यापितत्साधनत्वेनमानोपयोगानस्तउतस्तइति ॥
पूर्वपक्षस्तु ॥ उपासनंहिभगवद्दर्शनार्थंद्रष्टव्यश्रुतेः तस्यचश्रवणमननाभ्यांवाध्यानैवो
पपत्तौनत्रितयसाध्यत्वेप्रमाणमस्ति ॥ द्रष्टव्यःश्रोतव्योमंतव्योनिदिध्यासितव्य इतिश्रु
तिस्त्वेकस्मिन्साधनविधानेनाप्युपपन्नं किंचनत्रितयस्योपयोगोस्ति ॥ नचाज्ञातज्ञा
पनेन श्रवणस्यतन्नियमजननेन मननस्यदार्ढ्यजननेन ध्यानस्योपयोगइतियुक्तं ॥
तथाचत्रितयस्यापिपृथक्फलत्वेन दर्शनोद्देशेन त्रितयविधानानुपपत्तेः ॥ एवंप्र १४९

माणोपयोगयोरभावे दर्शनस्यात्रितयसाध्यत्वाभावेन फलाभावाच्च समस्तोपासनंका
र्यमिति ॥ सिद्धांतस्तु ॥ द्रष्टव्यइतिश्रुतौ दर्शनोद्देशेन त्रितयस्यापि विधानाद्विक
ल्पद्योतकशब्दाभावेनत्समुच्चयसाधनतावगमात्समुच्चित नामेवद्दर्शिरूपफलहेतुत्रितय
कार्यमेव नचोपयोगाभावःशंक्यः ॥ दर्शनंप्रतिध्यानस्यैवहेतुत्वेपि ध्यानस्यद्दर्शिज
ननेपेक्षितायाःप्रतिबंधकाज्ञानसंशयविपर्ययनिवृत्तेःसंपादनेन श्रवणमननयोरूपयोगि
त्वादिति ॥ फलंतुजिज्ञासासूत्रोक्तत्रितयसमर्थनं ॥ २५ ॥ ॐ प्रदानवदेहितदुक्तम्
ॐ ॥ प्रधानकर्तव्यत्वसिद्धौ तदंगमिहनिरुप्यतइतिवापूर्वश्रवणादित्रयस्यापि फल
मुक्तमिहांगमुच्यत इतिवाद्दर्शिहेतोर्ध्यानस्य श्रवणमननाख्यमंगमुक्तमिहत्रितयस्या
प्यंगमुच्यतइतिवासंगतिः ॥ अत्रप्रकृतश्रवणादित्रयंयथाकथंचिदनुष्ठितं ज्ञानहेतुरुत

१० प्रीतिपूर्वकगुरूपदेशइतिचिंता ॥ तदर्थं तस्यताद्दशगुरूपदिष्टत्वेन फलहेतुत्वेसाधकं मु.अ.
५० नास्ति श्रुतिविरोधादिबाधकंचास्त्युतविपरीतमिति ॥ पूर्वपक्षस्तु ॥ गुरुपदेशयुक्त ३।३
मेवश्रवणादिकंद्दशिहेतुरित्यत्रप्रमाणाभावात्प्रत्युतद्रष्टव्यइतिश्रुतौद्दश्युद्देशेन श्रवणा
दिरूपस्यैवविधानेन तद्विरोधरूपस्यज्ञानस्य गुरुप्रसादाधीनत्वेज्ञानिनोपिमोक्षस्यत
दधीनत्वप्रसंगेन कदाचिद्गुरुकोपेन मोक्षाभावस्याप्यापत्त्या अनियमःसर्वेषामित्युक्त
भंगरूपस्यबाधकस्यचसत्वाच्च नगुरुप्रदानयुक्तंज्ञानहेतुः किंतुकेवलमेवश्रवणादिकं
नचगुरुकोपोनमोक्षप्रतिबंधकः ॥ तथात्वेगुरुप्रदानमपिज्ञानेकिंचित्करमिति ॥ सि
द्धांतस्तु ॥ प्रीतिपूर्वकगुरूपदेशरुपांगयुक्तमेवश्रवणादिकंज्ञानहेतुर्नकेवलं ॥ आचा
र्यवानपुरुषोवेदेतिश्रुतौज्ञानस्यगुरुप्रसादाधीनत्वावगमेन तेनविनाश्रवणादिमात्रेण १५०

ज्ञानासिद्धेः ॥ सम्यग्लक्षणसंपन्नोयदद्यात्सुप्रसंनधीः ॥ शिष्यायसत्यंभवतितत्सर्वं
नात्रसंशयइति ॥ नातिप्रसन्नहृदयोयद्द्याद्गुरुरप्यसौ ॥ नतद्वाच्यंभवेत्तस्मादर्चनी
योगुरुःसदेतिस्मृतेश्च ॥ नचद्रष्टव्यश्रुतिविरोधोबाधकः ॥ श्रवणादेः प्रधानसाधन
त्वाद्गुरुर्दानस्य तदंगत्वात्सोमरससाध्ययागस्य दृढमुष्टिनिपीडनाधीनत्वेपि तस्यतदं
गत्ववत् ज्ञानस्यगुरुप्रदानाधीनत्वेपि तस्यज्ञानहेतुश्रवणांगत्वोपपत्तेः ॥ अंगस्यचप्र
धानसाधनेन सहेतुकलक्ष्यतयाविधानाभावेपि दृढमुष्टिनिपीडनादेरिवार्थाद्वावचनां
तराद्वाप्राप्तत्वे प्रदानस्यद्रष्टव्यश्रुत्यनुमतत्वात् ॥ नचकदाचित्कोपेन ज्ञानस्यचध्या
३६ निनोपिमोक्षस्यवाभावापातोबाधकइतिवाच्यं ॥ ज्ञानमोक्षयोरीश्वरक्लृप्तत्वेन तदभा
वायोगात् ॥ गुरुशापादेश्च ज्ञानिनोगुरुशापेपीत्यादिस्मृत्या ज्ञानदिन्हासहेतुत्वेन

साफल्योपपत्तेरिति ॥ फलंत्वितरेत्वर्थसामान्यादित्यत्रोक्त गुरुसापेक्षत्वस्यसमर्थनम् ॥
॥ २६ ॥ ॐ लिंगभूयस्त्वात्तद्धिबलीयस्तदपि ॐ ॥ पूर्वप्रकृतागांगिनोर्मध्येत्वंगस्य
बलवत्वसाधनात्संगतिः ॥ अत्रश्रवणादिसाधनं तदंगगुरुप्रदानंचेतिद्वयंसमबलमुता
न्यतद्बलवदिर्चिंता ॥ तदर्थं पुरुषत्वसाम्यंगुरुशिष्यप्रयत्नयोः साम्यापादकंभवत्युत
नेति ॥ तथान्यतरद्बलवदित्यत्रशिष्यप्रयत्नोबलवानथगुरुदानंबलवदितिचिंता ॥
तदर्थं प्रदानस्य बलवत्वेसाधकंनास्तिबाधकंचास्त्यथविपरीतमिति ॥ पूर्वपक्षस्तु ॥
प्रदानस्यबलवत्वेक्वापीतिकर्तव्यतायाः साधनादपिप्राबल्यादर्शनेनेतिकर्तव्यत्वभंग
प्रसंगात् श्रवणादिवैय्यर्थ्याप्रसंगाच्च बाधकभावात्साधकाभावाच्च नप्रदानंबलवत्किं
तुश्रवणाद्येवप्रधानसाधनत्वात् ॥ मास्तुवाबलवद्गुरुशिष्ययोः पुरुषत्वाविशेषात्गुरुप्र

दानंशिष्यप्रयत्नश्चद्वयंसममेवस्यात् ॥ नहिकश्चिन्न्यूनाधिकभावेपिविशेषोस्तीति ॥
सिद्धांतस्तु ॥ नतावत्साम्यंयुक्तं ॥ पुरुषत्वेगुरुत्वशिष्यत्ववत्प्रयत्नयोरपिन्यूनाधिक
भावसंभवेन पुरुषत्वमात्रस्याप्रयोजकत्वात्न्यूनाधिकभावेपिप्रदानस्यैवाधिक्यमुक्तं॥
लिंगबाहुल्यरूपसाधकाभावात् हिंसायाःपापजननशक्तायाअपियागीयहिंसायाःप्रो
क्षणांजनपर्यंग्निकरणादीतिकर्तव्यताबलेन पुण्यजनकत्वदर्शनेन तत्रेतिकर्तव्यतायाः
प्राबल्यवत् अत्रप्रदानस्यप्राबल्येंगत्वभंगप्रसंगाभावात् ॥ श्रोतव्यइत्यादिश्रुत्यागुरुप्रसा
दोबलवानित्यादिस्मृत्याच श्रवणादेरप्यावश्यकत्वेन तद्वैय्यर्थ्याभावाच्च ॥ बाधकाभा
वाच्चेति लिंगबाहुल्यंचटीकादौव्यक्तं ॥ फलंतुसेतिकर्तव्यस्यैवश्रवणादेर्ज्ञानहेतुत्वरूप
प्राग्उक्तप्रमेयसमर्थनं ॥ अन्यथाक्वचिद्गुरोरनपेक्षितत्वप्रसंगेन प्राग्उक्तमयुक्तंस्यादिति ॥

२७॥ ॐ पूर्वविकल्पःप्रकरणात्स्याक्रियामानसवत् ॐ ॥ यत्प्रसादोबलवानित्युक्तंसगु
रुरत्रचिंत्यतइतिसंगतिः ॥ अत्रप्रकृतोगुरुःकिंपूर्वप्राप्तएवेतिनियमोथान्योपिगृहीतुंश
क्यइतिचिंता ॥ तदर्थं पूर्वत्यागेकारणंनास्तिबाधकंचास्तिउतविपरीतामिति ॥ तथा
न्योपिग्राह्यइतिपक्षे सकिंयःकश्चिदुतपूर्वस्मादनपकृष्टःसमग्रानुग्रहकर्तैवेति ॥ पूर्वप
क्षस्तु ॥ शुभलाभार्थंहि गुरुस्वीकारोभवति ॥ सचपूर्वप्राप्तगुरुणैवभाविष्यतीतितत्त्वा
गेकारणाभावात् ॥ गुरुमंत्रपरित्यागीरौरवंनरकंव्रजेदितिदोषश्रवणरूपबाधकाच्च पूर्व
प्राप्तएवगुरुर्नत्वन्योपिग्राह्यइति ॥ अन्योपिग्राह्यइतिपक्षेचनियामकाभावादाद्यःक
श्चिदेवेति ॥ सिद्धांतस्तु ॥ गुरुपरिग्रहोहि नकेवलंकिंचिच्छुभलाभार्थं ॥ किंतुयावद
पेक्षितस्वयोग्यशुभलाभार्थं ॥ तस्ययदिपूर्वगृहीत्रसमर्थस्तर्हिस्वापेक्षितालाभप्रसंगेन

समग्रानुग्रहार्थत्वरूपकारणसत्वादन्योपिगुरुः स्वीकार्यः ॥ सोपिनयादृशतादृशः किंतु
स्वस्मादनपकृष्टः समग्रानुग्रहकर्तैवसचसमश्चेत्पूर्वानुज्ञयास्वीकार्योनवेतिविकल्पः समफ
लयोर्ध्यानयोरिवनतुस्वीकार्यएवेतिनियमः उत्तमश्चेत्पूर्वानुज्ञांविनैवस्वीकार्यः स्यात् ॥
सर्वस्योक्तार्थस्यपूर्वस्माद्युत्तमोलब्ध इतिस्मृत्यासमग्रानुग्रहंकाश्चिदितिस्मृत्या सिद्धत्वा
द्ब्रह्मोपास्वेतिश्रुतौ पूर्वगुरुणैवस्वसमोत्तमस्वीकारायातिदिश्यमानत्वाच्च ॥ नचदोषव
चनविरोधः ॥ तस्याधमस्वीकारविषयत्वेनव्यर्थस्वीकारविषयत्वेन पूर्वानुज्ञाभावविष
यकत्वेन सावकाशत्वादिति ॥ फलंतुइतरेत्वित्यत्रोक्तार्थस्य सर्वज्ञगुरूक्तप्रकारेणगुणा
दिध्यानंकार्यमित्यस्यसमर्थनं ॥ २८ ॥ ॐ विद्यैवतुनिर्धारणात् ॐ ॥ यस्योपास
नस्य गुरुप्रदानरूपेतिकर्तव्यताफलभेदाधिकारिध्येयादिकं तस्यलघूपायकर्मंहेतुतावा

क्येन मुक्तिहेतुत्वानिर्णयात् सर्वंप्रागुक्तमभित्ति चित्रायितमितिशंकनात्संगतिः ॥
अत्रप्रकृतंश्रवणाद्युपासनं नकार्यमुतकार्यमितिचिंता ॥ तदर्थं तस्यज्ञानद्वारामुक्ति
हेतुनिर्णयोनसंभवत्यथसंभवतीति ॥ तदर्थं कर्महेतुत्ववाक्यानांभाक्तंवेत्यत्रपरंपरया
मुक्तिहेतुत्वादिरूपभाक्तत्ववर्णनं अयुक्तमुतयुक्तमितिचिंता ॥ तदर्थं कर्मणैवेतितृती
ययातस्यसाक्षान्मुक्तिहेतुत्वबोधनस्यापवादकंनास्त्युतास्तीति ॥ तथाज्ञानद्वारामु
क्तिहेतुत्वनिर्णयपक्षेकिंपरोक्षज्ञानद्वारमात्रेणोतापरोक्षज्ञानद्वारमात्रेणापीति ॥ पूर्वप
क्षस्तु ॥ कर्मणैवहिसंसिद्धिमास्थिताजनकादय इत्यादाववधारणस्यवक्ष्यमाणदिशा
सावकाशत्वेपि तृतीयाविभक्त्याकर्मणःसंसिद्धिशब्दितमुक्तिंप्रतिसाक्षाद्धेतुत्वावगम
स्यापवादकस्यप्रमाणस्य कस्यचिदभावात्तरतिशोकमात्मविदित्यादेर्ज्ञानस्य मुक्ति १५३

हेतुतामात्रप्रापकतया कर्मणोमुक्तिहेतुत्वानपवादकत्वात् ॥ एवंचनिरपवादसाक्षा
न्मुक्तिहेतुबोधकवाक्यबलेन कर्मणोपिसाक्षान्मुक्ति हेतुत्वावगमेनभाक्तंवानात्मवि
त्वादितितृतीयाद्यपादे कर्मणोमुक्तिहेतुत्वंगौणमितिवर्णनस्यायुक्तत्वाज्ज्ञानद्वाराश्रव
णाद्युपासनमेवमुक्तिहेतुरिति निर्णयासंभवाल्लघूपायेसति गुरूपायस्यनिशंकमनुष्ठाना
योगाच्च नकार्यमुपासनामिति ॥ मास्तुवाज्ञानद्वारोपासनंमुक्तिहेतुस्तथापितमेवंवि
द्वानितिश्रुत्या परोक्षस्यैवमुक्तिहेतुत्वावगमात्तस्यच श्रवणादिनैवसिद्धेर्ध्यानंसर्वथा
नकार्यमेवेति ॥ सिद्धांतस्तु ॥ नान्यःपंथाइतिसावधारणहेतुत्ववचनस्य कर्मवचना
दपिबलवत्वेनतेन साक्षात्कर्महेतुत्वोपादिततया कर्मणैवेत्यादेरपिपरंपरयाकथंचिन्मु
क्तिहेतुत्वस्य प्रागुक्तरीत्या वर्णनीयत्वाज्ज्ञानद्वारामुक्तिहेतुत्वस्योपासनेनिर्णयसंभवा

त्कार्यमेवोपासनं ॥ द्वारंतुतंज्ञानमपिनपरोक्षमात्रं किंतुदृष्ट्वैवतंमुच्यतइत्यादिबलेन
विद्वानितिश्रुतेरप्यपरोक्षपरत्वादपरोक्षज्ञानमपीति श्रवणादित्रितयमपिकार्यमेवेति—
स्मृतिरपिसावधारणेत्येतदग्रेनिरंसिष्यते ॥ फलंतुप्रागुक्तसमर्थनं ॥ २९ ॥ ॐ श्रुत्या
दिबलीयस्त्वाच्चनबाधः ॐ ॥ यदिश्रुतेःसावधारणत्वेनबलवत्त्वं तर्हिस्मृतेरपितथात्वा
दाप्तवाक्यत्वाद्बलवत्त्वमितिशंकानात्संगतिः ॥ अत्रज्ञानफलत्वेन पूर्वत्रप्रकृतोमोक्षः
किंकर्मसाध्योथज्ञानसाध्यमितिचिंता ॥ तदर्थं कर्मणैवेतिस्मृतिः नान्यःपंथाइतिश्रु
तितोपिबलाद्उतनेति ॥ तदर्थं कर्मणैवेत्यवधारणंनिरवकाशमुतसावकाशमिति ॥
तदर्थं सावकाशकल्पकंनास्त्युतास्तीति ॥ पूर्वपक्षस्तु ॥ कर्मसाध्योमोक्षः कर्मणैवे
तिस्मृतेःनचसावधारणश्रुतिबाधितासतीस्मृतिर्दुर्बलेतिवाच्यं ॥ स्मृतेरपिसावधारण

त्वात् तच्चतदयोगव्यवछेदकतयासावकाशंकल्पकाभावात् ॥ नचश्रुतिविरोधेदौर्बल्यं
स्मृतेःश्रुतेरेवचप्राबल्यमितिविरोधेत्वनपेक्षंस्यादितिपूर्वतंत्रेसिद्धमितिवाच्यं ॥ स्मृतेः
श्रुतिमूलत्वेनप्रामाण्यपक्षएवेति तत्कर्मणैवेतिस्मृतेश्चभगवद्वाक्येनैवप्रामाण्योपगमे
नाप्तवाक्यतया सावधारणतयाचप्राबल्येनाविद्याश्रुतेर्बाधादिति ॥ सिद्धांतस्तु ॥ ज्ञान
साध्यएवमोक्षोनकर्मसाध्यः ॥ ज्ञानसाध्यत्वेबलवच्छ्रुतिलिंगोपपत्तिस्मृतीनांभावात्
निरवकाशावधारणयुक्तित्वेनश्रुतेर्बलवत्वात् ॥ तथाबहुकृतोपींद्रस्य दुःखासंभिन्नसु
स्वरूपमोक्षार्थं तत्वज्ञानप्रार्थनलिंगस्येंद्रोश्वमेधानितिसुप्रसिद्धस्यबलवत्वात् ॥ तथा
प्युत्पत्तिनाशवत्फलत्वेनावधृतकर्मणानित्यपुमर्थोनतादित्युपपत्तेश्च ॥ नास्त्यकृतः
कृतेनेतिश्रुतिसिद्धतया निर्दोषतयाचप्रबलत्वात् ॥ कर्मणाबध्यतइतिस्मृतिश्चभगव

द्वाक्यतयायुक्तिमत्तयाचबलवत्वात् ॥ एवंबलवतोमोक्षस्यज्ञानसाध्यत्वनिर्णायकानां अनेकसाधनानांभावादेवकर्मणैवेत्यवधारणस्य कर्मणासंसिद्धिमास्थिताएवेत्ययोगव्यवच्छेदकतयासावकाशत्वात्स्मृतेर्नकर्मसाध्यत्वापादनेप्रामाण्यमिति ॥ फलंतूपासनाकर्तव्यत्वसमर्थनं ॥ ३० ॥ ॐ अनुबंधादिभ्यः ॐ ॥ दर्शनाच्चेतिपूर्वत्रदर्शनस्यमुक्तिहेतुतया पूर्वनयेनिर्णीतत्वेन प्रकृतत्वात्तस्यभक्त्यादिसाध्यत्वमत्रोच्यतइतिसंगतिः ॥ प्रकृतंदर्शनं किंभक्त्यादिनाविनाप्रदानोपेतश्रवणादिमात्राद्भवतिउतनेतिचिंता ॥ तदर्थं दर्शनहेतूपासनंभक्त्यादिनाविनापिभवत्युतनेति ॥ तथाभक्त्यादिनाविनापिभवदपिफलपर्यवसाय्युतनेति ॥ पूर्वपक्षस्तु ॥ भक्त्यादिनाविनाप्रदानयुक्तश्रवणादिमात्रादेवदर्शनंभविष्यति ॥ सम्यग्लक्षणसंपन्नइत्यादिस्मृत्या गुरुप्रसादासाध्यस्यकस्याप्यभावात् ॥ नचोपासनमेवभक्त्यादिहीनस्यनेतियुक्तं ॥ द्वेषेणापितत्संभवात् ॥ नचयुक्तेऽपासनंनफलपर्यवसायीतियुक्तं ॥ द्वेषाच्चैद्यादयोनृपाइतिसप्तमस्कंधे द्वेषेणध्यायतामपिमुक्तिस्मरणादिति ॥ सिद्धांतस्तु ॥ दर्शनंनभक्त्यादिहीनात्प्रदानयुतोपासनाद्भवति ॥ किंतुभक्त्याद्युपेतादवभक्त्यादिनाविनाभगवतोप्युपासनस्यपुमर्थाहेतुत्वस्य प्रत्युतानर्थहेतुत्वेन द्वेषाद्यन्मुक्तिकथनं श्रुतिवाक्याविरोधितदित्युपक्रम्यानुव्याख्यानोक्तानेकमानसिद्धत्वेन फलपर्यवसाय्युपासनस्यतुगुरुप्रसादस्यचभक्त्यादिनैवसिद्धेरित्यस्य तथाप्यनादिसंसिद्धभक्त्यादिगुणपूगतः ॥ लभेद्गुरुप्रसादमित्यादिसिद्धत्वात् ॥ द्वेषाचैद्यादयइत्यादिस्तुस्वाभाविकभक्ताविषयतयोपपत्तेरिति ॥ फलंतुभक्त्यर्थकपूर्वपादीयमहात्म्योक्तिसाफल्यसमर्थनं ॥ ३१ ॥ ॐ प्रज्ञांतरपृथक्त्व

मा०
५६

वद्द्दष्टिश्चतदुक्तं ॐ ॥ यद्दर्शनेभक्त्यादिकमावश्यकमित्युक्तं ॥ तस्मिन्दर्शनेतारत मु.अ.
म्यमत्रानिरुप्यतइतिसंगतिः ॥ प्रकृतंमुक्तिहेतुभगवद्दर्शनं किंमेकप्रकारमुतानेकप्रका ३।३
रमितिचिंता ॥ तदर्थं दृष्ट्वैवतंमुच्यतेभक्त्यामामभिजानंति इत्यादिवचनंसर्वेषामेक
रूपज्ञानस्य हेतुतापरमुतनेति ॥ तदर्थं सर्वेषामेकरूपज्ञानस्य हेतुतापरंनेत्यत्रकल्पकं
नास्त्युतास्तीति ॥ पूर्वपक्षस्तु ॥ सर्वेषांमुक्तिहेतुज्ञानमेकरूपमेव दृष्ट्वैवतमितिश्रुतौ
सर्वेषामविशेषितज्ञानेनमोक्षश्रवणात् ॥ भक्त्यामामभिजानातियावान्यश्चास्मितत्व
तः॥ ततोमांतत्वतोज्ञात्वाविशतेतदनंतरमितिसर्वेषांभक्त्यादिनासंपूर्णज्ञानोत्पत्तेः ॥
संपूर्णज्ञानेनैवमोक्षस्य गीतायांस्मरणात् ॥ नचश्रुत्यादिकंविशेषपरं ॥ कल्पकाभा १६६
वात् ॥ नचज्ञानहेतूपासनातारतम्यमेवकल्पकं ॥ अनेकविधसाधनवतामपिकदाचि

त्कर्षकाणामिवसाध्यसाम्योपपत्यातस्याप्रयोजकत्वात् ॥ ज्ञानस्यन्यूनाधिकरूपविशे
षवत्त्वेभक्त्येतिस्मृतौ संपूर्णज्ञानेनैवमुक्तियुक्तेस्तद्धीनानां मुक्त्यभावापातेनानियमः
सर्वेषामित्युक्तभंगप्रसंगाच्चेति ॥ सिद्धांतस्तु ॥ अनेकरूपमेवाधिकारिणांभगवद्दर्शनं ॥
तत्साधनोपासनस्यविचित्रतयातज्जन्यज्ञानेपिवैचित्र्यस्यावश्यकत्वात् ॥ साधनानुसा
रित्वात्फलस्य नचतद्ज्ञानोपत्याप्रयोजकं ॥ अंतर्दृष्ट्योबहिर्दृष्ट्यइत्यादिश्रुतौज्ञानवै
चित्र्यस्यप्रमितत्वेन सर्वेषामेकरूपस्यबाधितया तेनोपासनवैचित्र्यस्यान्यथोपपत्तेः ॥
कादाचित्ककर्षकदृष्टांतमात्रेणकल्पयितुमनुचितत्वात् ॥नचसर्वेषांमुक्त्यभावापातदो
षः ॥ दृष्टैवह्यवताराणामितिस्मृत्यातरतमभावापन्नज्ञानेनैवाधिकारिणांमोक्षावगमेन
२७ भक्त्येतिस्मृतेःसामान्यतः गुर्वविषयकज्ञानस्यमुक्तिहेतुपरत्वेनवा हिरण्यगर्भरूपाधि

कारिविशेषपरत्वेनवोपपत्तेरिति ॥ फलंतुयावदित्यत्रोक्तमोक्षतारतम्यसमर्थनं ॥३२॥
ॐ नसामान्यादप्युपलब्धेर्मृत्युवन्नहिलोकापत्तिः ॐ॥ यद्भगवद्दर्शनेवैचित्र्यंतद्दर्शन बिंबविषयमेवमुक्तिहेतुरितिनिरूपणात्संगतिः ॥ अत्रप्रकृतंभगवद्दर्शनंकियत्किंचिद्रूप विषयंमुक्तिहेतुरुतबिंबरूपाविषयामितिचिंता ॥ तदर्थं रूपविशेषविषयकस्यैवमुक्तिहेतु त्वेन स्थानतोपीत्यत्रनिर्णीतभगवद्रूपाणां साम्यभंगप्रसज्यतेथनेति ॥ तथाकिंचिद्रूप दृष्टेर्मुक्तिहेतुत्वे फलंतस्याःप्रसज्यतेनवेति ॥पूर्वपक्षस्तु॥ कस्यचिद्रूपस्यमोक्षदानशक्ति रन्यस्यनेत्यंगीकारेनस्थानतोपिपरस्योभयलिंगंसर्वत्रहीत्युक्तसर्वरूपसाम्यस्यभंगाप- त्तायत्किंचिद्रूपज्ञानमपिमुक्तिहेतुरेव किंचसामान्यदृशेर्मुक्त्यहेतुत्वे तद्दर्शनस्यवैफल्य प्रसंगात्नचतद्युक्तं ॥ अतोमुक्तिरेवतत्फलमितिसामान्यदृशिरपिमुक्तिहेतुरेव ॥ अपि



चयदिकिंचिद्रूपज्ञानंमुक्तिहेतुरन्यन्नेतिविकल्पस्तर्हिबिंबज्ञानमपिकिंचिन्मुक्तिहेतुःकिं चिन्नेत्यनियमइत्युक्तभंगप्रसंगइति ॥ सिद्धांतस्तु ॥ यथामृतीनांमृतित्वाविशेषेपि मृतिविशेषानंतरमेवमुक्तिरेवंभगवद्रूपाणां समत्वेपिभगवत्संकल्पानुसारेण बिंबभूत रूपविशेषज्ञानमेवमुक्तिहेतुः नयत्किंचिद्रूपज्ञानंसमोपिभगवान् स्वबिंबदर्शनएवैनंमो चयतीतिश्रुतेःनचैवंसामान्यदृशेर्वैफल्यं ॥ सामान्यदर्शनाल्लोकाइतिस्मृत्या महरादि लोकांतरस्यैवतत्फलत्वात् ॥ मुच्यतेनात्रसंदेहोदृष्ट्यातुस्वात्मयोग्ययेतिस्मृत्या ज्ञाने पिविकल्पवद्बिंबदर्शनंतदनापत्तेरिति ॥ फलंतुबिंबोपासननैयत्यसमर्थनं ॥ ३३ ॥
ॐ परेणचशब्दस्यताद्विध्यंभूयस्त्वात्वनुबंधः ॐ ॥ दृशिहेतुत्वेन प्रागुक्तभक्तेरत्र स्वातंत्र्यनिरासात्संगतिः ॥ प्रकृतदर्शनंकिभक्तसामर्थ्येनभवतिकिमीश्वरशक्त्येति

चिंता ॥ तदर्थं भक्तिरेवैनंदर्शयतीतिश्रुतिः किंभक्तिःस्वातंत्र्यपराअथकर्तुरीश्वरस्य
दृशिदानेकारणत्वपरेति ॥ तदर्थं भक्तेःकारणत्वपरत्वेकल्पकं नास्तिभक्तिरेवेतिवि
शेष्योक्तिश्चायुक्तोतविपरीतामिति ॥ पूर्वपक्षस्तु ॥ भक्तिरेवेनंदर्शयतीतिभक्तेः कर्तृत्व
श्रवणस्यकारणत्वे ईश्वरपरत्वकल्पनेकल्पकाभावात्साधनांतरेषुसत्सु विशिष्यभक्तिरे
वात्रोक्तेः बीजाभावेनायुक्तत्वाच्च भक्तिरेवेश्वरप्रसादमनपेक्ष्यस्वशक्त्यैवभगवंदापरोक्ष्यं
ददातीति ॥ सिद्धांतस्तु ॥ भक्तेरेवदृशिकर्तृत्वेएतैरुपायैयततेयस्तुविद्वान्स्तस्यैष
आत्माविशतेब्रह्मधामेत्यथर्वणश्रुतौ एतैःप्रवचनाद्युपायैःयोदर्शनार्थंयतते तस्यार्थेप्र
संनःपरमात्माब्रह्मधामवायुंविशतितत्रतस्याविर्भवतिः इतिभक्त्याद्युपायैः प्रसन्नेश्वर
स्यैवस्वापरोक्ष्यदातृत्वग्रहणेन विरोधापत्याभक्तिरेवैनामितिश्रुतेःभक्तेः कर्तृपरत्वायो

गेन कारणपरत्वात्साधनेषुभक्तेः प्राधान्येनभक्तिरेवेतिविशिष्यभक्ते रुक्त्युपपत्तेःभ
क्त्यादि सर्वशब्दनांप्रथमेध्यायेभगवतिसमन्वयस्योक्तत्वेन प्रकृतिनयन्यायेन स्त्रीलिं
गभक्तिः शब्दस्यापिविष्णौमुख्यतयाश्रुतेर्विष्णुपरतयोपपत्तेः ॥ भक्तिस्थःपरमोविष्णु
रित्यादिस्मृतिबलादनादिभक्तिप्रसंन्नेश्वरसामर्थ्येनतदपरोक्षज्ञानमिति ॥ फलंतुतद
व्यक्तमाहहीत्युक्ताव्यक्तत्वसमर्थनं ॥ ३४ ॥ ॐ एकआत्मनः शरीरेभावात् ॐ ॥
अनादिभक्तेर्दृष्टिकारणत्वोक्तिरयुक्तास्थानविशेषादित्यत्रभाष्याद्युक्तदिशा अनादिभ
क्त्यादिसंपत्तिरूपयोग्यतासापेक्षत्वस्यैवायोगादितिभावेन शंकनात्संगतिः ॥ अत्र
प्रकृतोपासनादावनादियोग्यतापेक्षानास्त्युतास्तीतिचिंता ॥ तदर्थं योग्यतायाअना
दित्वंनसभभत्युतसंभवतीति ॥ तदर्थमर्जुनाद्यंशानांकिंस्वरूपेणोत्पातिरस्त्युतनेति ॥

तदर्थमंशांशिनोर्भेदउताभेदइति ॥ तदर्थमभेदसाधकं नास्तिबाधकंचास्तितत्यत्रवि
परीतमिति ॥ पूर्वपक्षस्तु ॥ अंशांशिनोरभेदेसाधकप्रमाणाभावात् प्रत्युतांशांशिनो
श्चैत्रमैत्रयादिवद्दानसुखदुःखादिभेदोपलंभस्याभावप्रसंगरूपबाधकभावाच्च भेदाव-
श्यंभावेन अंशिनइंद्रादेरनादित्वेप्यर्जुनाद्यंशस्यस्वरूपेणोत्पातिः संभवनेंद्राद्यंशानाम
र्जुनादीनांसादित्वेन तद्धर्मयोग्यतायामपितथात्वेन योग्यतायाअनादित्वायोगान्ना
नादियोग्यतापेक्षास्त्युपासनादाविति ॥ सिद्धांतस्तु ॥ अंशंस्यस्वरूपोत्पत्तिपक्षेतच्छ
रीरार्जकपूर्वतनतदनुष्ठितकर्माभावान्मोक्षाभावप्रसंगेन कर्मनिमित्तशरीरायोगादन
न्यगत्या अंशिनस्तुपृथक् ज्ञानायशाः स्वस्यैवकर्मेणेतिस्मृत्याचांशिककर्मार्जितशरीरे
अर्जुनाद्यंशानामवस्थानामित्यवश्यंवाच्यत्वात्तस्यचांशिनोर्भेदेयोगात्तत्कर्मार्जितशरी 

रेवस्थानान्यथानुपपत्तिरूपेणांशिगतप्रधानसाधनोपासनादिकं फलस्यांशेनानुसंधी
यमानत्वेन तदन्यथानुपपत्तिरूपेणांशांशिनोरभेदसाधकमानेनाल्पज्ञानसुखाद्यननु-
संधानस्थ मानुषसंपर्कप्राकृतान्नभोजनादिनाभगवदिच्छयोपपत्याच बाधकाभावेन
चाशांशिनोरभेदादनाद्यभिन्नांशस्य स्वरूपोत्पत्ययोगेनतस्याप्यनादित्वेनतद्धर्मभूत
योग्यतायाअप्यनादित्वसंभवात्॥अस्त्यनादियोग्यतापेक्षोपासनादाविति ॥ फलंतु
योग्यताहीनानामप्युपासनप्रसंगेनाव्यवस्थापत्यभावः ॥ ३५ ॥ ॐ अंगावबद्धास्तुन
शाखासुहिप्रतिवेदं ॐ ॥ पूर्वत्रप्रकृतइंद्रादिदेवतानांतद्योग्यतानुसार्युपासनमत्रोच्यत
इतिसंगतिः ॥ अत्रप्रकृतभगवदुपासनंकेवलंकार्यमुतब्रह्मांगदेवतोपासनयुक्तमिति
चिंता ॥ तदर्थं तमेवेकंजानथप्ूजयेन्नान्यदेवताइत्यादौ अन्योपास्तिनिषेधः किंस

र्वात्मनाउतप्राधान्येनेत्यत्रज्ञापकंनास्त्युतास्तीति ॥ तथान्यदेवतोपासनेपिकिमेकत्र
प्रतीताग्गुणाः सर्वेष्वध्येयाउततत्तद्योग्याएवेति ॥ पूर्वपक्षस्तु ॥ तमेवैकंजानथेत्यादि
श्रुतिस्मृतिषु अन्यदेवतोपासनपूजादेर्निषिद्धत्वास्वातंत्र्येणैव पूजादेर्निषेधइत्यत्रज्ञाप
काभावात्केवलमेवभगवदुपासनंकार्यं देवतोपास्तेः करणेपिएकत्रप्रतीतगुणयुक्तत्वे
नैवसर्वदेवतोपास्तिःकार्या ॥ देवत्वादेः सर्वत्रोपास्यत्वदर्शनाद्बाधकाभावाच्चेति ॥
सिद्धांतस्तु ॥ देवानांदेवेष्वप्रतिपादनस्याध्यानायप्रयोजनाभावादितिन्यायेनोपास
नार्थत्वेन तदुपासनाभावदस्त्युतउक्तवैयर्थ्येन तदुक्तान्यथानुपपत्तिरूपसाधकसद्भा
वात्ततएवतमेवेत्यादेः प्राधान्येनोपास्तिनिषेधपरत्वावश्यंभावेन तद्विरोधाभावाद
न्यदेवतोपास्तियुक्तत्वेनैवभगवदुपासनंकार्यं अन्यदेवतोपासनेपिसमत्वाद्योत्तमत्वा

द्वाइत्यादिस्मृत्यादेवानांनीचोच्चभावापन्नतयाउत्तमगुणानाधमेषुध्येयाः ॥ किंतुतत्त
द्योग्याएवयथाभगवद्वाचकवाक्यानांनसर्वेषांसर्वत्रान्वयः ॥ किंतुयोग्यानामेवतद्वत्
अधमगुणास्तूत्तमेषुध्येयाः ॥ यथाधमदेवताप्रतिपादकमंत्राण मुत्तमप्रतिपादकत्वे
नाध्ययनंतद्वत्तथोपासनमपि फलविशेषार्थंउत्तमाधिकारिभिरेवकार्यंनसर्वैः उपासनां
गदेवानामित्यादिस्मृतेरिति ॥ फलतुंदेवताप्रतिपादकवेदभागसार्थक्यसमर्थनं ॥
॥ ३६ ॥ ॐ भूम्नःक्रतुवज्ज्यायस्त्वंतथाचदर्शयति ॥ पूर्वत्रदेवतोपासनेगुणोपसह्व
तिफलस्यसर्वाप्राप्यत्वात्सानसर्वै कार्येत्युक्तौतर्हिंभूमगुणोपास्तिरपिनसर्वैः कार्या ॥
निरतिशयभूमत्वस्यकेनाप्यप्राप्तत्वादितिशंकोदयात्संगतिः ॥ अत्रयोवैभूमेत्यादौ
श्रुतौभूमगुणः किंनसर्वोपास्योथसर्वोपास्यइतिचिंता ॥ तदर्थं तदुपासनमनर्थकम्

तार्थवदिति ॥ पूर्वपक्षस्तु ॥ यद्यसंभूत्यादिगुणोपास्तिफलस्यसर्वाप्राप्यत्वान्नसंभूत्या
दिकंसर्वोपास्यं तथानिरतिशयपूर्णत्वरूपभूमत्वंकस्याप्ययोग्यतयाप्राप्तुंमिष्टंनेतिव्य
र्थत्वाद्भूमत्वं नसर्वोपास्यंतस्यसर्वोपास्यज्ञानानंदादिविशेषणत्वेपिप्रियाशिरस्त्वादिक
मिवफलानुपयोगेनानर्थत्वान्नसर्वोपास्यभूमत्वमिति ॥ सिद्धांतस्तु ॥ तथैवदेवःपरमो
ह्युपास्यइतिश्रुत्याज्ञानानंदादिगुणेषुसर्वत्रभूमत्वस्यसहभावे नोपासनेसत्प्रवेशफलसि
द्धेन्यथातुनेत्यवगमेनज्ञानंभूममानंदश्चभूमेत्येवं रूपेणभूमगुणोपास्तेरभिमतफलप्राप्ति
हेतुत्वेनार्थवत्वात्सर्वैरुपास्यभूमत्वं यथादीक्षाप्रापणीयोदयनीयसवनत्रयावभृतात्मकः
क्रतुःसर्वयागेष्वनुवर्ततएवसाफल्यादन्यथावैफल्याज्ज्यायस्त्वेनसर्वैः कर्तव्यस्तद्वदि-
ति ॥ फलंतुकार्याख्यानादित्यत्रलौकिकगुणोपासनसमर्थनं ॥ ३७ ॥ ॐ नानाश



ब्दादिभेदात् ॐ ॥ पूर्वसामान्येनोक्तस्यात्रविशेषचिंतनाद्वाभूमत्वस्यसर्वोपास्यत्वे
यावदित्यत्रोक्ततारतम्यभंगापत्तिरितिशंकनाद्वात्संगतिः ॥ अत्रप्रकृतभूमत्वमधिकारि
णामेकरूपेणप्रतीयतेनानारूपेणेतिचिंता ॥ तदर्थं नानारूपेणव्युत्पत्तौतस्याःप्रतीतेर्भ्रा
तित्वमापद्यतउतनेति ॥ तदर्थं भूमत्वमेकरूपमेवननानारूपमपिसंभवतीति ॥ पूर्व
पक्षस्तु ॥ निरतिशयितपूर्णत्वरूपभूमत्वेतारतम्यास्यासंभाविततयाउत्पन्नत्वेन एकरू
त्वात् ॥ एकरूपस्यापिश्रवणमननापरोक्षज्ञानेषुतारतम्येनभानेश्रवणादेर्मिथ्याज्ञानत्वे
प्रसंगादेकरूपेणप्रतीयतेइत्येवयुक्तमिति ॥ सिद्धांतस्तु ॥ अतीतवत्सरमासपक्षदिन
घटिकाद्यानंत्येतारतम्यवदिहापिभूमत्वेतारतम्यसंभवेन भगवद्गुणेषुभगवतिचतावा
दानंत्यानांसत्वेन तत्तदधिकार्यानुसारेणतावत्तावद्भूमत्वस्यश्रवणमननपरोक्षज्ञानेषुप्र

तीतौतावन्मात्रमेवेत्यप्रतीत्याभ्रांतित्वानापत्तेः ॥ नानारूपमेवप्रतीयतइति ॥ नाना रूपमेवाधिकारिभिःस्वस्वप्राप्यफलानुरोधेनोपास्यमिति ॥ फलंतुप्रागुक्ततारतम्यस मर्थनं ॥३८॥ ॐ विकल्पोविशिष्टफलत्वात् ॐ ॥ पूर्वत्रगुणोपास्तौविशेषउक्तोत्रतुरूपो पास्तौसउच्यतइतिसंगतिः॥ अत्रभगवदुपासनंकिंबिंबातिरिक्तरूपाविषयंनकार्यमेवेति नियमउतकार्यंनवेतिविकल्पइतिचिंता॥ तदर्थं तदुपास्यफलंनास्त्युतास्तीति॥ तदर्थं तदुपासनस्यमोक्षः फलमन्यदपीति ॥ पूर्वपक्षस्तु ॥ मुमुक्षुभिःक्रियमाणोपासनस्या न्यफलकत्वायोगेन मोक्षफलस्यनसामान्यादप्युपलब्धेरित्यत्रोक्तदिशा बिंबोपास्ति साध्यत्वेमोक्षफलकत्वस्याप्ययोगेनचनिष्फलत्वात् प्रत्युतमोक्षोपास्तियोगिबिंबोपा स्तिविघ्नकरत्वाच्च बिंबातिरिक्तनृसिंहाद्युपासनंनकार्यमेवेति ॥ सिद्धांतस्तु ॥ उपास

कानांमोक्षकामित्वेपिमोक्ष हेतुर्बिंबोपासनोपियोगितयापेक्षितदुरितनिवृत्तिफलकत्वेन सफलत्वात्ताहृशफलकामिनाकार्थं नृसिंहाद्युपासनं तीव्रयाबिंबोपासनमेवोचितं ज्ञा पयितुंसमर्थंनंतुकार्यमितिषोडशिग्रहणाग्रहवत्व्यवस्थितविकल्पः ॥ सुत्स्यथ मात्मयोग्यंहीत्यादेःस्मृतेरिति फलंतुनृसिंहादिप्रतिपादकग्रंथसाफल्यंसमर्थनं ॥३९॥ ॐ काम्यास्तुयथाकामंसमुच्चीयेरन्नवापूर्वहेत्वभावात् ॐ ॥ मोक्षोपयोगिफलत्वेन नृसिंहाद्युपासनस्यकार्यत्वे उपयोगित्वात्काम्यरूपाद्युपासनमपिकार्यंस्यादिति शंक नाद्यान्नृसिंहाद्युपास्तिरिवकाम्यरूपाद्युपास्तेरपि वैकल्पिकत्वसाधनत्वाद्यासंगतिः ॥ अत्रकामसाधनभगवद्रूपगुणविषयकमप्युपासनमावश्यकमुतविकल्पइतिचिंता ॥

२८ तदर्थं तदावश्यकत्वेमोक्षोपयोगादिहेतुरस्त्युतनेति ॥ पूर्वपक्षस्तु ॥ अर्थादिनाविना

ज्ञानसिध्यार्थाद्यार्जकंभगवद्रूपं तद्गुणादिकंतद्रुपासनस्यजीवनादिद्वाराज्ञानोपयोगि-
त्वादर्थकामनावश्यंभावादवश्यकमेवकाम्यभगवद्रूपाद्युपासनमिति ॥ सिद्धांतस्तु ॥
अर्थग्रहारामक्षेत्रविधुराणामपिज्ञानसंपादनदर्शनेनावश्यमर्थादिनैवज्ञानमिति निय-
माभावेनतस्यमोक्षहेतूपासनानुपयोगात् अधिकारिणांमुमुक्षुत्वेनार्थादिकामनाभा-
वाच्च काम्योपासनंमुमुक्षुभिर्नकार्यंभगवत्प्रीत्यर्थं कार्यमितिफलभेदेनवाऽव्यवस्थितवि
कल्पएवनत्वावश्यकमितिनियमः ॥ यस्ययस्यहीतिस्मृतेरिति ॥ फलंतुवैराग्यपादो
क्तवैराग्यफलकगर्भयातनादिनिरूपणसमर्थनं ॥ ४० ॥ ॐ अंगेषुयथाश्रयभावः ॐ ॥
पूर्वत्रकाम्योपास्तेरधिकारिसंभवेन कार्यत्वेपीहांगदेवतोपास्तेस्तदभावेनाकार्यत्वमि 
तिशंकनात्संगतिः ॥ अत्रभगवदंगाश्रितत्वेन ब्रह्मादिदेवताविषयकमुपासनंनकार्य

मुतकार्यमितिचिंता ॥ तदर्थं श्रुतौदेवतानामंगाश्रितत्वकथनंतथोपासनविधानंगुण
साधारणश्रवणंच तथोपासनकार्यत्वापादनक्षमंनभवत्युतभवतीति ॥ तदर्थं तत्कि
मुपासनंनिरधिकारिकमुतसाधिकारिकमिति ॥ तदर्थमधिकारिकल्पनंनास्त्युतास्ती
ति ॥ पूर्वपक्षस्तु ॥ तथोपासनंनकार्यंहेत्वभावात् ॥ नचब्रह्माशिरसिललाटेरुद्रइत्या
दिश्रुतौ देवानामंगाश्रितत्वेनोक्तेराध्यानायप्रयोजनाभावादितिन्यायेनोपासनार्थ-
त्वात्तदुक्त्यन्यथानुपपत्तिः ॥ यस्मिन्यस्मिन्योहिचांगेनिविष्टःपरस्यचिंत्यः सतथात
थैवेतिश्रुतौविधानं साधारण्यात्सर्वगुणाः परस्यसमाहार्यास्तत्वदृशोमुमुक्षोरितिज्ञा
नानंदादिगुणातौल्येन सूर्याद्याश्रयचक्षुस्त्वादीशगुणानामुपास्यत्वश्रवणंच तथोपा
सनाकार्यत्वेहेतुरितिवाच्यं ॥ तथोपासनस्यसर्वाधिकारित्वं आनंदमयइत्युक्तचतुर्गु

णोपास्तिनियमभंगात् नहिब्रह्माश्रितशिरस्कत्वादिकंभूमत्वमिवानंदादिविशेषणं ये
नप्रागुक्तनियतिव्याघातकंनस्यात ॥ नचदेवाधिकारिकंतदुपासनंकल्पकाभावात् ॥
नहिराजाराजसूयेनयजेतेत्यादौराजादिपदमिवब्रह्माशिरसीत्यादिश्रुतौ देवाएतउपा
सीरन्निितिवाक्यमस्ति तादृशविशेषविध्यभावेपि अधिकारिविशेषकल्पनेचोदनाद्य
विशेषादिति सर्ववेदांतनयोक्तन्यायाविरोधः ॥ अतस्तथोपासनस्यनिरधिकारित्वात्
कुतोत्रउक्त्यादिकंस्वयंव्यर्थंस्यात् नतथोपासनंकार्यतापादनक्षममिति ॥ सिद्धां
तस्तु ॥ कार्यमेवतथोपासनंनचहेत्वाभावः श्रुतौतदुक्त्यन्यथानुपपत्त्यादेरनुष्ठापक
त्वात् नचनिरधिकारिकत्वदोषः ॥ अंगैःपराद्येहिदेवाविसृष्टाइतिश्रुतौ ब्रह्माश्रितल
लाटत्वसूर्याश्रितचक्षुष्ट्वादिगुणोपासनस्य परमस्थानप्राप्तिरूपफलश्रवणात् ॥ तस्यच

देवप्राप्यत्वेन फलपर्यालोचनयामधुविद्यायामिवदेवानामेवाधिकारित्वकल्पनोपपत्ते
रिति ॥ फलंतुतद्विद्यासार्थक्यसमर्थनं ॥४१॥ ॐ नवातत्सहभावश्रुतेः ॐ ॥ अत्र
प्रागुक्तमेवविशेषुहेतुनाक्षिप्यसमर्थ्यतइतिसंगतिः ॥ अत्रब्रह्माश्रिताशिरस्कत्वादिभ
गवद्गुणोपासनं नकार्यमुतकार्यमितिचिंता ॥ तदर्थं तदुपासनस्यसर्वशाखास्वनुक्ति
रकार्यत्वेन विनानुपपन्नेनान्यथोपपन्नेति ॥ तदर्थमन्यथोपपत्तिकल्पकंनास्त्युतास्ती
ति ॥ पूर्वपक्षस्तु ॥ नकार्यमेवतथोपासनं सर्वशाखास्वनुक्तत्वात् ॥ अवश्यकार्यत्वे
सर्वशाखागतोपासनेन सहभावप्रसंगात् ॥ अतःसर्वत्रानुक्तिरकार्यत्वेन विनानुपप
न्नातदेवगमयतीति ॥ सिद्धांतस्तु ॥ सर्वथाकार्यत्वाभावेक्वचित्तदुक्तावप्याध्याहारप्रसं
गात् ॥ सत्योज्ञानःपरमानंदरूपइत्यादिश्रुत्याज्ञानादिगुणचतुष्टयाधिकगुणानदेवोपा

स्यत्वे कथंतेनतथोपासनस्यदेवमात्राधिकारित्वेनसर्वत्रानुक्तेः ॥ सर्वैरकार्यंत्वेनान्य
थोपपत्तेः कार्यमेवतथोपासनमिति ॥ फलंतुप्रागुक्तप्रमेयसमर्थनं ॥ ४२ ॥ इति
श्रीमद्राघवेंद्रयतिकृतायां न्यायमुक्तावल्यां तृतीयाध्यायस्यतृतीयःपादः समाप्तः ॥
श्रीकृष्णार्पणमस्तु ॥ ॥ ॥ ॥ ॥ ॥ ॥





॥ श्रीगुरुभ्योनमः ॥ हरिः ॐ ॥ पूर्वपादोक्तोपासनासाध्यज्ञानमाहात्म्यमत्रोच्यत
इतिपूर्वपादेनास्यसंगतिः ॥ ॐ पुरुषार्थोतःशब्दादितिबादरायणः ॐ ॥ अत्रज्ञानं
किंमोक्षमात्रेहेतुरुतमोक्षेतरस्यस्वर्गादिपुरुषार्थहेतुरपीतिचिंता ॥ तदर्थं तत्रमानंना
स्त्युतास्तीति ॥ पूर्वपक्षस्तु ॥ नज्ञानंमोक्षेतरपुरुषार्थस्यापिहेतुः ॥ मुमुक्षोस्तत्रेच्छाभा
वात् ॥ सौभर्यादेरिवेच्छायाभावेपितद्धेतुत्वेमानाभावात् ॥ तद्धेतुत्वपरश्रुत्यादेःकर्म
णस्तथात्वप्रतिपादकश्रुत्यादिविरोधात् ॥ कर्मैवदेहंदैवकंमानुषंवाप्यन्वारभेन्नपरस्तत्र
हेतुरित्यादिश्रुतौकर्मण एवमोक्षेतरफलहेतुत्वस्ययदेवविद्ययेतिश्रुतौ ज्ञान्यनुष्ठितेकर्म
जन्यफलेतिशयाधायकत्वेन ज्ञानेकर्मशेषत्वस्यचश्रवणात् ॥ अतएवज्ञानकर्मणोः
स्वर्गादौतुल्यकक्षतया हेतुत्वशंकानवकाशः ॥ तथानैवदेवपदमितिस्मृत्याज्ञानि

नामपिदेवानांयज्ञेनयज्ञमयंजतदेवाइतिकर्मानुष्ठानदर्शनेन ज्ञानेस्यैवसर्वपुमर्थहेतुत्वे
तदनुपपत्याचकर्मणएवहेतुत्वानुमानाच्च ॥ एवमेवजैमिन्याचार्यैरंगिकाराच्च ॥ नच
ज्ञानिनामाचारोमुक्तवल्लिलयान्यथोपपन्नइतिशंक्यं ज्ञानीचकर्माणिसदोदितानिकु
र्यादितिश्रुतौ ज्ञानिनोपिकर्मविधानात् ॥ विहितस्यचलीलत्वायोगात् ॥ कुर्वन्ने
वेहकर्माणीतिश्रुतौ उत्तरार्धएवकर्मकरणेत्वयिकर्मनालिप्यतइत्यत अन्यथाअकरणे
वरेज्ञानिन्यपि त्वयिपापंकर्मनलिप्यतइतिनास्तीतिज्ञानिनोपिकर्माकरणेप्रत्यवायश्र
वणाच्च ॥ ज्ञान्याचारस्यालिलत्वायोगादतःश्रुत्याचारविरुद्धत्वात् जैमिनिमतविरोधाच्च
यंयंलोकंमनसेत्यादिकंज्ञानस्यसर्वपुमर्थहेतुत्वपरंवाक्यं स्वर्गहेतुकर्मशेषेपिधनादौस्व-
र्गधनाद्देहतोवैगृहाच्च प्राप्स्यंतीत्यादौप्राधान्योक्तिवत्कर्मशेषभूतज्ञानप्राधान्योक्तिपरं

नेयं ॥ तत्तुसाक्षाद्दानस्यसर्वपुमर्थसाधनहेतुत्वपरं ॥ नचकर्मणस्तद्धेतुत्वपरश्रुत्यादिकं
सर्वपुमर्थहेतुज्ञानशेषत्वपरं ॥ निरवकाशकल्पकाभावात्कर्मणः कृतावकृतौचज्ञानंमो
क्षार्जनंक्षेममेवेति ॥ स्तुतिनयेवक्ष्यमाणत्वेनदानेतिशयकरत्वायोगेन तच्छेषत्वायोगा
च्चेति ॥ सिद्धांतस्तु ॥ कर्मणोज्ञानेतिशयाधायकत्वेन तच्छेषत्वायोगेपिज्ञानादेवस्व
र्गोज्ञानादेवापवर्गइतिश्रुतौ ज्ञानादेवस्वर्गादिफलप्राप्तेःकर्मणोज्ञानजन्यफलेतिशया
धायकत्वेन ज्ञानशेषत्वस्यचश्रवणात ॥ राजसूयजितांल्लोकानस्वमेधाभिवर्धितान ॥
प्राप्तोहित्वंमहाभागेतिभारतवाक्येन युधिष्ठिरादीनांराजसूययागादिनाफलाधिक्यद
र्शनरूपाल्लिंगाच्च ज्ञानस्यैवसर्वपुमर्थहेतुत्वस्यकर्मणः ज्ञानजन्यफलेतिशयाधायकत्वेन
ज्ञानशेषत्वस्यावगमेनासत्वाद्बादरायणमतत्वेनचकर्मणःतद्धेतुत्वपरवाक्यादीनां तद्धे

तुत्वज्ञानशेषत्वपरत्वेननेयतयातद्विरोधाभावात् ॥ यंयंलोकमित्यादिवाक्यबलाद्बाद रायणसंमतत्वाच्च ज्ञानंमोक्षेतरसर्वपुमर्थहेतुर्भवत्येवेति ॥ नचैवंजैमिनिबादरायणम तयोर्विरोधः देवमानुषरूपात्मकादिभेदेनाविरोधादिति ॥ फलंतुज्ञानादावतिशयेन प्रवृत्तिरिति ॥ १ ॥ ॐ असार्वत्रिकी ॐ ॥ पूर्वत्रज्ञानात्सर्वपुमर्थाप्तौनज्ञानिनांसर्वेषा मधिकारःकिंतत्प्रमानंतत्रापिअप्रतिबंधानामितिउक्तामिहज्ञानेसर्वेषामाधिकारोनेत्युच्य तइतिसंगतिः ॥ सर्वपुमर्थहेतुत्वेनपूर्वत्रप्रकृतेज्ञानेसर्वेषामधिकारोस्त्युतनेतिचिंता ॥ तदर्थं पुरुषविभागोनांगीकार्योथांगीकारार्हइति तदर्थमर्थित्वादिकमेवाधिकारेतंत्रमु तान्यदपीति ॥ तदर्थमर्थित्वाद्याधिकारप्रयोजकंनास्त्युतास्तीति ॥पूर्वपक्षस्तु॥ अर्थी समर्थोविद्वानधिक्रियते इतिन्यायसिद्धफलापेक्षित्वाद्यन्यस्याधिकारप्रयोजकस्याभा १६७

वात् ॥ तस्यचनिर्दुःखसुखरूपमोक्षेऽर्थित्वस्यश्रवणादिसमर्थस्य तदुपयुक्तवैदुष्यस्यच संभवेन सर्वेषुभावात्सर्वेषामर्थित्वारूपप्रयोजकसाम्येपि केषांचिदेवाधिकारोनान्येषा मितिपुरुषविभागांगीकारस्यनिर्बीजतयानुचिततया केषांचिदभावेन्येषामप्यभावापा तेन तस्मिन्निरधिकारित्वप्रसंगात् ॥ अस्तिज्ञानेसर्वेषामधिकारइति ॥सिद्धांतस्तु ॥ पठे द्वेदानर्थार्थानधीयीतात्रथविचार्यब्रह्मविंदेत्॥अवैष्णवस्यवेदेपिह्याधिकारोनविद्यतइत्या दिश्रुतिस्मृतिसिद्धस्यसांगफलयथाशक्तिकृत्स्नाध्ययनवत्वरूपप्रयोजकांतरस्यापिसत्वे नार्थित्वादिमात्रस्यातंत्रता ॥ नचमोक्षोहिदेवानामितिस्मृत्युक्तदिशा सर्वेषांदेवत्वसा म्येपिपरापरब्रह्मद्वयाधिकशतस्यैवसोमाधिकारोनान्येषामिति विभागवत् अर्थित्वादौ समानेप्युक्तरूपप्रयोजकवतामेवाधिकारोनान्येषामिति पुरुषविभागस्यायुक्तत्वात् ॥

नसर्वेषांज्ञानाधिकारइति ॥ फलंतुकर्मापेक्षयाज्ञानेतिशयसमर्थनं ॥ २ ॥ ॐ नावि
शेषात् ॐ ॥ पूर्वंकेषांचिदेवज्ञानाधिकारइत्युक्तमत्रतुकेषांचित्साध्येपिसंपूर्णाधिकारो
नसर्वेषामितिसमर्थनात्संगतिः ॥ प्रकृतोकालाधिकारः किंसर्वेषांदेवादीनामेकप्रका
रोथनानाप्रकारइतिचिंता ॥ तदर्थं प्रज्ञांतरपृथुत्कवहृष्टिश्चेत्यत्रोक्तंदृष्टितारतम्यमाधि
कारनानात्वेनविनाधिकारिशक्तिनानात्वेनापिउपपद्यतेथनेति ॥ पूर्वपक्षस्तु ॥ अ
धिकारिणामुच्चावचशक्त्यैवप्राग्युक्तज्ञानतारतम्योपपत्तेः ॥ कल्पकाभावान्नानारूपो
धिकारइति ॥ सिद्धांतस्तु ॥ अधिकारिणःशक्तेरुच्चावचत्वस्याधिकारिभावेनाधि
कारोच्चावचत्वेनउत्तमत्वेन तदभावेनशक्तितारतम्यस्याप्यभावात् ॥ उपजीव्यत्वाधि
कारतारतम्येनैवप्राग्युक्तज्ञानतारतम्यस्यानिर्वाह्येन तदन्यथानुपपत्त्यापुमर्थत्वसाधना

नीति ॥ भाष्योक्तश्रुत्याचाधिकारेणनानाप्रकारइतिदेवोत्तमानामेव संपूर्णाधिकारोना
न्येषामिति फलंतुज्ञानातिशयसमर्थनं ॥३॥ ॐ स्तुतयेनुमतिर्वा ॐ ॥ एवंपूर्वत्राधि
कारिभेदेसिद्धेअत्रत्रिविधाधिकारिभेदेन विरुद्धार्थकत्रिविधवाक्यानामविरोधोवर्ण्य
तइतिसंगतिः ॥ अत्रप्रकृतज्ञानवतःकिंसदाचारदुराचाभ्यां विशेषोनास्त्युतास्तीति
चिंता ॥ तदर्थं सब्राह्मणःकेनस्याद्येनस्यात्तेनेदृशएवेतिवाक्यं किंज्ञानिमात्रस्ययथेष्टा
चारविधिपरमुतनियमेनसर्वसदाचारानुष्ठानादिपरमिति ॥ तत्रज्ञानिनःसत्प्रवृत्यादि
नाविशेषसत्वे ज्ञानस्यमुक्तिहेतुत्वनियमभंगादिरूपज्ञानकर्मसमुच्चयवादरूपंचबाधक-
मस्त्युतनेतिचिंता ॥ तदर्थं ज्ञानिनोसत्प्रवृत्तिमोक्षस्वरूपप्रतिबंधोसतौहेतुरुतमोक्षगत
११ सुखाधिक्यप्रतिबंधोत्पत्तौहेतुरिति ॥ तदर्थं मसत्प्रवृत्यादिनासुखाधिक्यव्यक्तिप्रति

बंधादिरूपविशेषसत्वेयदिहवाअप्येवंविन्निखिलंभक्षयीतैवमेवसभवतीतिश्रुतौ ज्ञानि
नःसर्वान्नभक्षणेप्यविशेषोक्तिरयुक्तोतयुक्तेति ॥ पूर्वपक्षस्तु ॥ सदसत्प्रवृत्तिभ्यांना
स्तिज्ञानिनोविशेषःसब्राह्मणइतिश्रुतौ ज्ञानिमात्रंप्रतियथेष्टाचारस्यविधिलिङंतःस्या
च्छब्देनाविधानात् सदसत्प्रवृत्तिभ्यांज्ञानिनेविशेषविधेरप्यभावे सर्वविध्यतिदूरत्वरू
पेशलक्षणस्यापिज्ञानिनिप्रसंगात् ॥ नचेदंवाक्यंज्ञानिमात्रस्यनयथेष्टाचाराविधिपरं
किंतुज्ञानिविशेषस्येतियुक्तं ॥ सामान्यवाक्यस्यविशेषपरत्वकल्पकाभावात् ॥ एवंच
नकेवलंयथेष्टाचारविध्यन्यथानुपपत्त्याविशेषोज्ञानिनःकल्पते॥ किंतुतेनेदृशएवेतिस्वे
च्छाचरणाविशेषश्रवणाच्च ॥ ननुनज्ञानिमात्रस्यस्वेच्छाचारविधिपरत्वमस्यवाक्यस्यो
पपद्यते॥प्रातरुत्थायाथसंध्यामुपासीतेत्यादिश्रुत्यनुरोधेन निषिद्धंकार्यमितिविध्यभा



वरूपताब्राह्मणोनहंतव्यइत्यादिनिषेधभावरूपयाच विध्यादिविधिबंधवर्जितयानिय
मेनसर्वदाचारानुष्ठानपरत्वमस्यवाक्यस्यपरमाप्तैर्जैमिन्याचार्यैर्यद्वर्णितं तथायश्चात्मर
तिरेवस्यादात्मतृप्तश्चमानवः ॥ आत्मन्येवचसंतुष्टस्तस्यकार्यंनविद्यते ॥ इतिस्मृत्याआ
त्मरतिःपरमात्मदर्शननिमित्तसुखमाप्तः ॥ आत्मन्येवचसंतुष्टःपरमात्मनिमित्तसंतोष
वत्वादेवहेतोः आत्मतृप्तःपरमात्मप्रसादेनविषयेष्वलंबुद्धिमाप्तःयःतस्यकार्यंनास्तीत्यु
क्त्यनुरोधेनानाचरणप्रयुक्तासाम्यानिषेधकेदृशएवेतिवाक्यशेषबलेन श्रुत्यायुक्त्याचा
रमध्येकेषांचिच्चरणमित्येवंरूपकमाचारपरत्वस्य यद्बादरायणाचार्यैर्वर्णितं ॥ तदुभ
यार्थपरत्वेच सतिकथंविधिरूपैकार्थत्वमुपेत्यज्ञानिनोयथेष्टाचारेप्यविशेषमुच्यते इति
चेन्मैवं ॥ तथात्वेवाक्यस्यपारिष्ठवार्थतापत्याप्रमाणाभावप्रसंगात् ॥ किंचमास्तुसाध

ा०
७०

काभावात् ज्ञानिनोविशेषाभावः विरोधेबाधकाभावाद्भविष्यति ॥ तथाहि ॥ यदिज्ञा
निनःसदसत्प्रवृत्तिभ्यांविशेषःस्यात्तर्हिअसत्प्रवृत्त्याकुंठितशक्तिकस्यज्ञानस्य मोक्षहेतुत्व मु.अ.
भंगप्रसंगेनानियमःसर्वेषामित्युक्तमोक्षनियमभंगःस्यात् ॥ सत्प्रवृत्तिसमुचितस्यज्ञान ३१४
स्यमुक्तिहेतुतापत्त्या विद्यैवतुनिर्धारणादित्युक्तिविरोधःस्यात् ॥ ज्ञानिनोसत्प्रवृत्त्यामो
क्षप्रतिबंधेजिज्ञासोरपितथाज्ञानप्रतिबंधापातेन वैराग्यपादानर्थक्यप्रसंगात् ॥ नच
सत्प्रवृत्यादेर्नमुक्तिस्वरूपेऽव्यापारो पितुमुक्तावानंदातिशयाभिव्यक्तितत्प्रतिबंधयोः-
ऽव्यापारइत्युक्तं ॥ तथात्वेज्ञानिनःसर्वान्नभक्षणानुमितिश्रुतिव्याकोपः तत्रसर्वान्नभक्ष
णेप्यविशेषस्यैवोक्तेः ॥ नचतस्याविषयांतरपरत्वेकल्पकमस्तीति ॥ सिद्धांतस्तु ॥
अस्त्येवज्ञानिनःसदसत्प्रवृत्तिभ्यांविशेषःकेनस्यादितिवाक्यस्यज्ञानिमात्रपरतयाप्र- १७०

तीतस्यापिज्ञानिस्तुतिमात्रपरत्वे सर्वविध्यतिदूररूपेशलक्षणस्यानीशेतिव्याप्त्याप-
त्तिरूपबाधकेन विधिपरत्वेपिजैमिनिबादरायणाभ्यामुक्तरीत्यासर्वसदाचारानुष्ठानवि
धिपरत्वं ॥ सर्वमध्येकेषांचिदनुष्ठानंकेषांचिद्धर्माणामननुष्ठानमित्येवपरत्वं तदुक्तरी
त्यास्वेच्छाचारविधिपरत्वमित्यर्थत्रयपरत्वस्यापि विधिनियतामनुष्याअनियतादे-
वाःब्रह्मैवस्वेच्छानियतइतिश्रुतौ स्वेच्छयैवप्रवृत्तिस्तुब्रह्मणोविधिचोदितेत्यादिस्मृतौ
चमानुषदेहविरिंचिरूपाधिकारिभेदेन व्यवस्थोक्त्याविरोधाभावेन ज्ञानिमात्रस्यस्वे
च्छाचारस्यवाक्यस्यप्रमाणाभावात् ॥ ज्ञानिनोसत्प्रवृत्त्यामोक्षाप्रतिबंधस्यका-
मचाराः कामभक्षाइतिश्रुत्या ज्ञानिनोनिवृत्यतयाप्रारब्दस्यारब्दकर्मणोपापंकिंचिदु
पभुक्तस्य ज्ञानेनोपमर्दस्यात्मानमभिपश्योपमृद्यपुण्यंचपापंचेतिश्रुतिसिद्धतयाकेमु

यो० त्यन्यायेनचसिद्धत्वेनानियमइत्युक्तनियमभंगरूपस्य यइमंपरमंगुह्यमूर्ध्वरेतस्सुभाष मु.अ.
७१ येदित्यूर्ध्वरेतःस्त्वादि गुणयुक्तेष्वेवोपदेशविधानेनज्ञानेसत्प्रवृत्याप्रतिबंधस्यप्रमितत्वे ३।४
नातिप्रसंगरूपस्यकेवलस्य ज्ञानस्यैवमोक्षस्वरूपनिष्पादकत्वेपिपश्यन्नपीममात्मानं-
कुर्यात्कर्माविचारयन् ॥ यदात्मनःसुनियतमानंदोत्कर्षमाप्नुयादित्यादिवाक्यबलेन
मोक्षेसुखातिशयार्थेसहकारित्वेनसत्प्रवृत्ति असत्प्रवृत्तिवर्जनयोरपेक्षायामपिज्ञानकर्म
समुच्चयवादापत्तिरूपस्यच बाधकस्याभावात्सर्वान्नानुमतिश्रुतेश्चभाष्याद्युक्तलिंगेन
प्राणात्ययविषयत्वेन सावकाशत्वात् ॥ किंचज्ञानिनोनिषिद्धस्याकरणेबाधकभावात
स्वेच्छाचारउच्यते ॥ करणप्रमाणाभावाद्वानिषेधकप्रमाणाभावाद्वा ॥ करणेबाधक
भावाद्वा॥नाद्यद्वितीयौ ॥ असिद्धेः नतृतीयः एवपश्यन्नकामचरतंचरेदिति ॥ अती १७१

तानागतज्ञानीत्रैलोक्योधरणक्षमः ॥ एतादृशोपिनाचारंश्रौतंस्मार्तंपरित्यजेदितिच
निषेधकश्रुतिस्मृतिभावात ॥ नचतुर्थः आनंदोऽह्रसतेकार्यादितिस्मृत्या आनंदह्रास
रूपबाधकस्यभावात ॥ तस्मादस्त्येवज्ञानिनःसदसत्प्रवृत्तिभ्यां मुक्तावानंदह्रासरू
पोविशेषइति ॥ फलंतुसदाचारेपिमुक्तिसंपादनरूपज्ञानमहिमसमर्थनं ॥ ४ ॥ ॐ
सर्वथापितुतएवोभयलिंगात् ॐ ॥ पूर्वत्रविशेषत्वादित्यत्रप्रकृतैर्मंदमध्योत्तमरूपाधि
कारिभिरेवज्ञानप्राप्यंनान्यैरित्यत्रोच्यतइतिसंगतिः ॥ अत्रज्ञानंकिमयोग्यैरप्राप्यंउत
प्रकृतयोग्यैरेवेतिचिंता ॥ तदर्थं योग्यैरेवाप्यमित्यात्रकल्पकंनास्त्युतास्तीति ॥ तथा
योग्यप्राप्यत्वपक्षेपिकिमयोग्यतायाःमहाप्रयत्नेनाभिभवेन तेषामपियोग्यतोत्पत्तिर
स्त्युतनेति ॥ तदर्थमयोग्यताकिंतेषामस्वभावउतास्वभावइति ॥ तदर्थं तस्याःस्वभा

वत्वे नानाभिभवेइंद्रापकंनास्त्युतास्तीति ॥ पूर्वपक्षस्तु ॥ योग्यानामेवेत्यत्रप्रमाणाभा
वात् ॥ वेदायोग्यस्वप्रयत्नेन वेदप्राप्तिदर्शनयोग्यानामपियत्नेन ज्ञानप्राप्तिरस्त्येवज्ञा
नस्ययोग्यमात्रप्राप्यत्वपक्षेपि अयोग्यानामयोग्यताभिभवेन योग्योत्पत्तिसंभवात् ॥
विश्वामित्रस्यमहाप्रयत्नेन क्षत्रियत्वाभिभवेन विप्रत्वदर्शनात्नक्षात्रियत्वमस्वाभावि
कं ॥ अयोग्यत्वंस्वाभाविकं ॥ नप्रयत्नेनाप्यनिवर्त्यमितिशंक्यं ॥ स्वाभाविकत्वेमा
नाभावात् ॥ स्वाभाविकत्वेयवकलमबीजादेरिवस्वभावानुसारिफलत्वप्रसंगाच्चेति ॥
सिद्धांतस्तु ॥देशकालगुरूपसत्यादिमहोत्साहेप्ययोग्यानामज्ञानप्राप्तिः ॥ किंतुयोग्या
नामेवइंद्रविरोचनयोश्चतुर्मुखोपदेशेसमानेपिनसम्यक्ज्ञानप्राप्तिः प्रत्युताविपरीतज्ञान
प्राप्तिरित्यस्यछांदोग्येष्टमेस्पष्टत्वेनेंद्रादेर्ज्ञान प्राप्त्यादिर्लिंगेन तथाज्ञानहेतुप्रसादस्यगु

क्तियोग्येष्वेव ॥ शृण्वेवीरउग्रमित्यादिसिद्धत्वेन तदन्यथानुपपत्त्याच्चतथावगमात् ॥
नचायोग्यानामपिमहाप्रयत्नेनायोग्यात।भिभवेन योग्यतोत्पत्तिरस्त्विवतियुक्तं॥अयो
ग्यताःयास्वभावत्वात् ॥ नचज्ञापकाभावःदेवीमेवसंपत्तिदेवाइतिश्रुतौ असुरासासुरे
णैवस्वभावेनैतिस्मृतौचानभिभवस्यस्वभावत्वस्यचस्पष्टश्रवणात् ॥ तथानासुरादेवीन
देवाआसुरीमित्यादिनियमश्रुत्यानासुराणां दैवंरूपमित्यतद्रूपवत्वश्रुत्यातंभूतिरिति-
देवाउपासांचक्रिरेइतिदेवासुरयोरन्योन्यविपरीतोपासनेन सम्यक्फलाविपरीतफलश्रु
त्याच देवासुरमानुषाणांदेवत्वादिस्वभावत्वप्रतिपादकजैमिन्याचार्यमतेनच कानी
यसादेवाज्यायसाअसुराइतिश्रुत्या नजनतामितिजनसमूहप्रवेशानिषेधान्यथानुपपत्ति
रूपलिंगेनचायोग्यतादेःस्वभावत्वानभिभवयोः तत्तत्स्वभावानुसारिफलसत्वावगमा

दिति ॥ फलंतुमोक्षस्ययोग्यतामात्रप्राप्यत्वसमर्थनं ॥५॥ ॐ नचाधिकारिकमपिप
तनानुमानात्तदयोगात् ॐ ॥ पूर्वंज्ञानस्ययोग्याप्राप्यत्वमुक्तमत्रतुयोग्येष्वपिदेवादिप
दाकांक्षाशून्यैरेवप्राप्यतोनसर्वैरित्युच्यतेइतिवाप्रागुक्तदेवत्वादेः स्वाभाविकत्वमयुक्तं
प्रयत्नसाध्यताश्रवणेनदेवत्वस्यास्वाभाविकत्वादितिशंकनाद्वानंतरसंगतिः ॥ पूर्वं
त्रदेवानांप्रकृतत्वात् संगतंदेवपदंदेवेतरैः प्राप्तुंयोग्यमुतादेवैरेवेतिचिंता ॥ तदर्थं
तत्पदप्राप्त्यर्थामिच्छाप्रयत्नकृतौबाधकंनास्त्युतास्तीति ॥ पूर्वपक्षस्तु ॥ स्वधर्मनिष्ठः
शतजन्मभिःपुमान्विरिंचतामेति ॥ वयाविष्णोरेषस्यप्रभृतेहविर्भिः ॥ विदेहिरुद्रो
रुद्रियंमहित्वमित्यादिवाक्यबलेनविरिंचत्वादेः यत्नसाध्यतावगमेनचेतनत्वादिवत्
देवत्वादेःस्वाभाविकत्वाभावेन यत्नेनसर्वैःप्राप्तुंशक्यत्वाच्चेतनत्वस्यस्वाभाविकत्व

स्यसर्वसंमतत्वाद्देवत्वादिप्राप्ताविच्छाप्रयत्नकृतौ बाधकाभावात् ॥ अन्यथाज्ञानभ
क्त्यादीच्छाप्रयत्नावपिनस्यातामिति ॥ देवाद्यन्यैरपिदेवादिपदंप्राप्यमेव किंबहुना
भगवदैश्वर्यमपियत्नेनप्राप्यमिति ॥ सिद्धांतस्तु ॥ देवतापदंभगवदैश्वर्यवानप्राप्यं
तदिच्छाप्रयत्नयोरेवायोगात् ॥ देवादिभिःप्राप्यतेअशक्यतत्पदेच्छुत्वाद्राजपदेच्छु
वत् ॥ देवादिपदप्रयत्नवानुपपत्ति ॥ अयोग्यारोहप्रयत्नवत्वात् ॥ अयोग्यवृ
क्षारोहप्रयत्नयुक्तवदित्यनुमानेनानर्थावगमात् ॥ नचचैतनत्ववद्देवत्वादिकंनस्वाभा
विकमित्ययोग्यत्वादिविशेषणमसिद्धं ॥ देवासुरनरत्वाद्याद्देवादीनांनसर्वतइतिवच
नेन स्वभावत्वावगमात् ॥ अन्यत्रयत्नमाकांक्षन्नपतेदविरोधतइतिवचनेन ज्ञाना
द्याकांक्षायामनर्थाभावस्यैवावगमेतिप्रसंगाभावादिति ॥ फलंतुदेवतापदवत् ॥

ज्ञानमपियोग्यंप्राप्यमेवेतिप्रमेयसमर्थनं ॥ ६ ॥ ॐ स्वामिनःफलश्रुतेरित्यात्रेयः
ॐ ॥ पूर्वत्रज्ञानस्येत्थंभावउक्तोत्रफलनिष्पादनप्रकारउच्यतइतिसंगतिः ॥ प्रकृतं
ज्ञानंतत्वाभिमानिदेवानामेवफलनिष्पादकमुतप्रजानामितिचिंता ॥ तदर्थं क्रिया
जन्यफलवत्वे प्रयोजककर्तृत्वमेवप्रयोजकमुतकर्तृत्वमात्रमपीति ॥ कर्तृत्वमपीत्य
त्रहेतुर्नास्तिबाधकंचास्तिउताविपरीतामिति ॥ तदर्थं कर्तृत्वमपिप्रयोजकमितिपक्षो
पिप्रयोजककर्तृत्वेसमानफलत्वमावस्यकमुतनेति ॥ पूर्वपक्षस्तु ॥ कर्तृत्वस्यापिप्र
योजकत्वसंकोचकमानाभावेन स्वामिफलसमफलमेवावश्यंवाच्यं ॥ तच्चस्वामीहि
फलमश्नुतेनास्वामीकर्मकुर्वाणइतिश्रुत्या आत्रेयाचार्यमतेनचविरुद्धं ॥ लोकेतक्षादेः
प्रयोजकाधीनकर्तुरपिक्रियाजन्यफलादृष्टेश्चस्मृत्यादिविरोधरूपबाधकाभावात ॥ सा

धकभावाच्च नकर्तृत्वमपिप्रयोजकं ॥ किंतुप्रयोजककर्तृत्वरूपस्वामित्वमपिसर्वेंद्रिया
दिप्रेरकाणांदेवानामेवप्रजाकृतश्रवणादिजन्यज्ञानफलंनप्रजानामिति ॥ सिद्धांतस्तु ॥
तत्वाभिमानिदेवानांप्रजाकृतश्रवणादौप्रयोजककर्तृत्वेन तत्फलस्यसंपूर्णस्यस्वामीही
तिश्रुत्याततोमहत्तरंप्रोक्तंदेवानामितिस्मृत्याऽत्रेयमतेनचसत्वावगमेपिदेवानामिति-
श्रुतिविहितेज्ञानादानादिकर्माणि प्रजानांज्ञानोत्पत्तिरनुग्रहायैवसहकारित्वेनोपादाना
त॥सत्रैवैदेहादिनागृहपतिनासहकारित्वेनोपात्तानामृत्विजामगृहमतीनामपिविफलद
र्शनाच्चास्तिप्रजानामपिकर्तृत्वनिमित्तंज्ञानजन्यफलमिति ॥ फलंतुअनियमइत्युक्तमु
क्तिनियमसमर्थनं॥७॥ॐ कृत्स्नभावात्तुगृहिणोपसंहारः ॐ ॥पूर्ववद्देवानांसंपूर्णफलव
३० त्वमुक्तमत्रतुसंपूर्णवर्णाश्रमधर्मवत्वमुच्यतइतिसंगतिः ॥ अत्राश्रमभेदभिन्नेषुज्ञानिमनु

ष्येषुकिंमुक्तौगृहस्थउत्तमःउतयतिरितिचिंता ॥ तदर्थं सर्वकर्मानुष्ठानयोग्यत्वमेव मु
क्तावुत्तमत्वेप्रयोजकमुतचिरकालसाधनानुष्ठानमेवेति॥तदर्थं मुक्ताद्यतेराधिक्ये आ
चार्यकुलाद्वेदमधीत्येत्यादिगृहस्थमोक्षोपसंहारपरवाक्यविरोधोस्त्युतनेति ॥ तदर्थं त
त्किमानुषविषयमुतदेवविषयमिति ॥ तदर्थं देवविषयत्वकल्पकंनास्तिबाधकंचास्तिउ
तविपरीतमिति॥पूर्वपक्षस्तु॥आश्रमांतरस्थानां सर्वसत्कर्मसुयोग्यताभावात्॥गृहस्था
नामेवतद्योग्यत्वात्तस्यैवचोत्तमत्वेप्रयोजकत्वाद्गृहस्थएवोत्तमोनयतिः॥ अन्यथाछंदो
गोपनिषद्यष्टमाध्यायांते॥आचार्यकुलाद्वेदमधीत्येत्यादिनागृहस्थस्यैवब्रह्मलोकमभि
संपद्यते नचपुनरावर्ततइतिमोक्षोक्तिपूर्वकमुपसंह्रियमाणत्वेन गृहस्थस्यैवमुक्तावुत्त १७५
मत्वेतात्पर्यावगमात्तद्विरोधःस्यात्॥नचेदंवाक्यंदेवपरं कल्पकाभावात् ॥ नचतेषांकृ

त्स्नगृहस्थधर्मवत्वेनमुख्यगृहीत्वमेवकल्पकं॥तथात्वेत्वरयासिद्धिमद्यतिभ्यःत्वरयासि
द्धिमद्गृहिणोनीचाइतिवादिनः सिद्धांतिनोमतेमानुषयतिभ्योदेवानां मुक्तावाधिक्या
भावादिति॥सिद्धांतस्तु॥गृहस्थस्यसर्वसत्कर्माधिकारसत्वेपि तावदाचरणनियमाभावे
न तत्संपाद्यमोक्षस्यत्वरयैवगृहिणस्साधयंति॥ मुक्तिमत्वरयैवयतयइतिश्रुत्याचाचिर
कालीनसाधनसाध्यत्वात्॥ यतिमोक्षस्यगृहिमोक्षादपि चिरकालसाध्यत्वेनाधिक्याद्य
तिरेवमुक्तावधिकोनगृही ॥ नचैवंछंदोगवाक्यविरोधः ॥ कृत्स्नाह्येतेगृहिणइत्यादिश्रु
तौ देवानामेवकृत्स्नगृहस्थधर्मवत्वेनमुख्यगृहित्वोक्त्या छांदोग्यवाक्येपि मुख्यगृह
स्थदेवपरत्वस्य मुख्यामुख्यन्यायप्राप्यत्वात् ॥ नचैवंमानुषयतिभ्योदेवानांमुक्ता
वाधिक्यभावप्रसंगोबाधकः ॥ कृत्स्नाह्येतेयतयइतिश्रुतौ कृत्स्नयतिधर्मत्वस्याप्युक्त

त्वात् ॥ तथादेवाएवब्रह्मचारिणइत्यादिश्रुतौ सर्वाश्रमधर्मवत्वश्रवणाच्च यतितोऽप्या
धिक्यसिद्धेरिति ॥ फलंतुज्ञानाधिकारिणामाधिक्योक्त्या ज्ञानमहिमसमर्थनं ॥
टीकायांतुगृहस्थउत्तमोयातिर्वेतिसंशयानुपदर्शनंतुपूर्वोत्तरपक्षादिशा शिष्यैरेवोहितुंश
क्यमितिसंदेहांतरोक्त्यभिप्रायोभावादिपेऽव्यक्तः॥८॥ॐ अनाविष्कुर्वन्नन्वयात् ॐ ॥
ज्ञानाधिकारिणामाधिक्यंचेदनेकेषांज्ञानाधिकारिणां ज्ञानसंपादनफलाधिक्याद्दुपदे
शोप्याविष्कारेणस्यादितिशंकनात्संगतिः ॥ अपरोक्षज्ञानसंगतपरोक्षज्ञानहेतूपदेशः
किमाविष्कारेणकार्यमुतनेतिचिंता ॥ तदर्थमाविष्कारेसाधकमस्तिबाधकंचनास्ति
उतविपरीतमिति ॥ पूर्वपक्षस्तु ॥ सभाचत्वरादौास्थित्वोपदेशे बहूनांतत्वज्ञानयो
ग्यनां ज्ञानोदयसंभवात् ॥ तेनचफलाधिक्येनसाधकभावात् बाधकाभावाच्चाविष्का

रेणैवोपदेशःकार्यइति ॥ सिद्धांतस्तु ॥ आविष्कारेणैपदेशेयोग्यानामिवायोग्यानां
उपदिष्टार्थग्रहणप्रसंगात् ॥ अयोग्योपदेशस्यच मानस्तेनेभ्यइत्यादिश्रुत्या निषि
द्धत्वेनानर्थहेतुत्वेन बाधकभावात्ततएवफलाधिक्यासिध्यासाधकाभावादनाविष्का
रोपदेशस्यैवानर्थाहेतुत्वेन योग्येष्वेवज्ञानोदयहेतुत्वेनफलातिशयहेतुत्वेनचोपपन्नत्वा
तअनाविष्कारेणैवोपदेशःकार्यइति ॥ फलंतुज्ञानातिशयसमर्थनं ॥ १ ॥ ॐ ऐहिक
मप्रस्तुतप्रतिबंधेतद्दर्शनात् ॐ ॥ पूर्वत्रपरोक्षज्ञानस्यापि गोपनाख्येइत्थंभावोक्तिरयु
क्तातस्यदृष्टिरूपफलव्यभिचारेणदृश्यहेतुत्वादितिशंकानिरासात्संगतिः ॥ अत्रपूर्वत्र
प्रकृतपरोक्षज्ञानसाध्यमपरोक्षज्ञानं किंसाधनसंपूर्तिजन्मन्येवभवतीतिनियमः उततत्र
जन्मांतरएवेत्यनियमइतिचिंता ॥तदर्थं तस्मिन्जन्मन्यनुदयेन तस्यकदाप्यनुदयएवा

पाद्यतेनेति ॥ तदर्थमनियमकल्पनंनास्त्युतास्तीति ॥ पूर्वपक्षस्तु ॥ श्रवणादिसाधनसंपूर्तिजन्मनि अपरोक्षज्ञानानुदयेयागादिसाधनसंपूर्ति जन्मन्येवस्वर्गसुखानुदयेतद्देहावच्छेदेन तादृशसुखभोगायोगरूपकारणस्यैवेहप्रबलकारणाभावात्तस्यतज्जन्मन्यनुदयेन जन्मांतरेतदुदयेइत्यत्रकल्पकाभावात् ॥ कदाप्यनुदयस्यैवापातात् तस्मिन्जन्मन्येवापरोक्षज्ञानोदयइति ॥ सिद्धांतस्तु ॥ साधनसंपूर्तिजन्मनियागफलस्वर्गानुदयेतद्देहावच्छेदेनभोगायोगस्यैवेहापितद्देहेज्ञानानुदयेजन्मांतरेतदुदयस्तदभावेतज्जन्मनीत्यनुदयेएवानियमएव॥ नचकल्पकभावः श्रुत्वात्मानंनेतिपूर्वत्युपास्यइहैवदृष्टिंपरमस्याविंदेदितिश्रुतौतथावगमादिति॥ फलंतुश्रवणादेर्ज्ञानहेतुत्वसमर्थनं॥ १०॥ ॐ एवंमुक्तिफलानियमस्तदवस्थावधृतेस्तदवस्थावधृतेः ॐ॥ यथापूर्वत्रज्ञानमैहिकमेवेत्यनियमएवंमोक्षफलमपि तद्देहपातानंतरमेवेतिननियमइतिसाधनात्संगतिः ॥ अत्रप्रकृतज्ञानसाध्योमोक्षः यच्छरीरेज्ञानमुत्पन्नंतद्देहपातानंतरमेवभवतीति नियमउतानियमइत्येवंपूर्ववदेवचिंता ॥ एवंपरापूर्वपक्षसिद्धांताश्चज्ञेयाः विशेषस्तूत्तरत्रज्ञानसाधनपूर्तिमज्जन्मनिज्ञानोदयेजन्मांतरेवातदुदयइत्यनियमे प्रारब्धप्रतिबंधरूपकारणवदिहतादृशकारणाभावेकल्पकंनेत्येवविशेषशंकायां ब्रह्मसंस्थोऽमृतमेतीतिब्रह्मसंस्थस्यमोक्षावधारणान्यथानुपपत्तिः ॥ विद्वानमृतमाप्नोतीतिश्रुतिश्चानियमेकारणीभूतप्रतिबंधभावतद्भावकल्पकेतिसमाधानं फलंतुअनियमइत्युक्तसमर्थनं ॥ ११ ॥ इति श्रीमत्परमहंसपरिव्राजकाचार्य श्रीमत्सुधींद्रतीर्थ श्रीपादपादाराधकराघवेंद्रयतिविरचितायां श्रीमन्न्यायमुक्तावल्यां तृतीयाध्यायस्यचतुर्थःपादः समाप्तोयमध्यायः ॥

॥ श्रीगुरुभ्योनमः ॥ ॐ हरिः ॐ ॥ पूर्वत्रएवमुक्तिफलानियमइतिफलपदेन मुक्ति
रेवज्ञानस्यप्रधानं फलमन्यत्वानुषंगिकमितिसूत्रितप्रधानंफलमत्राध्यायेप्रपंच्यते ॥
तत्रकर्मक्षयोत्क्रांतिमार्गभोगभेदच्युत चतुर्विधस्यमोक्षस्यक्रमभावित्वात्तत्सर्वक्रमात्पा
दचतुष्टयेपिवदिष्यन्नादौकर्मक्षयाख्यफलमाहाद्यपादे ॥ तत्रसप्तभिर्नयैः अंत्यतावश्यं
भाविसाधनंविचार्यते ॥ ॐ आवृत्तिरसकृदुपदेशात् ॐ ॥ अत्रैहिकमित्यत्रप्रकृतंश्र
वणादिकं सकृदनुष्ठेयमुतावर्तनीयमितिचिंता ॥ तदर्थं श्रवणादिविधेरग्निष्टोमादि
विधिवत्सकृदनुष्ठानएवपर्यवसानमुतावघातविधिवदावर्तनमेवेति ॥ तदर्थं ज्ञानंहि
श्रवणादेरसकृदनुष्ठानेनभवतिउतनेति ॥ तदर्थं ज्ञानस्यसुशकत्वंगुणः उतदुःशकत्वमे
वगुणइति ॥ तदर्थं दुःशकत्वस्यगुणत्वकल्पकंनास्त्युतास्तीति ॥ पूर्वपक्षस्तु ॥ श्रवणा

दिसाधनमग्निष्टोमादिवत्सकृदेवानुष्ठेयं ॥ तावतैवज्ञानोदयसंभवेनसकृदनुष्ठान एवश्रव
णादिविधेःपर्यवसानात् ॥ नचव्रीहीनवहंतीत्यादिविधेःसकृदनुष्ठानेनतुषविमोकरूप
फलासिद्धेः अवघातावर्तनेपर्यवसानवदिहकिंनस्यादितिवाच्यं तथात्वेज्ञानस्यसकृत्सा
धनानुष्ठानलभ्यत्वरूपसुशकत्वगुणाभावप्रसंगात् ॥ नचज्ञानस्यदुःशकत्वमेवगुणःक
ल्पकाभावादिति ॥ सिद्धांतस्तु ॥ अवघातादिवच्छ्रवणादिकमावर्तनीयं ॥ अवघा
तस्यसकृदनुष्ठानेनतुषविमोकस्येवेहश्रवणादेः ॥ सकृदनुष्ठानेनज्ञानोदयस्यादर्शनेन
तद्विधेरवघातादिविधिवदावर्तनएवपर्यवसानात् ॥ नचज्ञानस्यश्रवणाद्यावर्तनसा
ध्यत्वोपगमेसुशकत्वगुणभंगः ॥ महाफलहेतुज्ञानेदुःशकत्वस्यैवगुणत्वात् ॥ नचज्ञा
नस्यदुःशकत्वंगुणइत्युपेत्य श्रवणाद्यावर्तनसाध्यत्वोपगमेकल्पकाभावात् ॥ दुःशके

नश्वेतकेतुंप्रतिसएषोऽणिमेत्यादितत्वस्यनवकृत्वश्छांदोग्येषष्ठेउपदिष्टत्वेन तदन्यथानुप
पत्तेःश्रवणावृत्तिकल्पकत्वात् ॥ अन्यथासकृदेवोपदेशकरणापातात् ॥ तथातैत्तिरी
येभृगुवल्यां तस्माएतत्प्रोवाचअन्नंप्राणः चक्षुःश्रोत्रंमनोवाचमितिश्रुत्यान्नादिरूपविष
यएवभृगोःअधीहिभगवोब्रह्मेतिपुनःश्रवणमननध्यानानिकुर्वितिभावेन तद्विजिज्ञास
स्वेतिवरुणस्योक्तिःश्रुतस्यपुनरालोचनेनापेक्षितत्वमित्येवं रूपलिंगदर्शनस्यचानित्यश
श्रवणंचेतिस्मृते श्रवणमननध्यानावृत्तिकल्पकत्वादिति॥फलंतुऐहिकमित्यादावभिम
तस्यश्रवणादेर्ज्ञानहेतुत्वसमर्थनं ॥१॥ ॐ आत्मेतितूपगच्छंतिग्राहयंतिच ॐ ॥ पूर्वंय
इदानार्थंश्रवणाद्यावर्त्यमित्युक्तं ॥ तस्यात्मत्वस्यस्वामित्वशब्दितस्यात्रध्यानमावश्यक
मितिसाधनात्संगतिः ॥ अत्रप्रकृतात्मत्वोपासनोपदेशौन नित्यशःकार्यावुताकार्या



वितिचिंता ॥ तदर्थमात्मत्वरूपस्वामित्वस्यापिप्रसिद्धित्वतदुपासनादि प्रतिबंधकमु
तनेति ॥ तदर्थं तस्यप्रतिबंधकत्वकल्पकंनास्त्युतास्तीति ॥पूर्वपक्षस्तु॥ आत्मत्वध्या
नोपदेशौन नित्यशःकार्यावुताकार्यौ ॥ तस्यस्वामित्वरूपस्यानित्यप्रसिद्धत्वात् सुप्र
सिद्धस्यनित्यंसर्वमनसिविपरिवर्तनेन ध्यानोपदेशवैयर्थ्यात् ॥ अप्रसिद्धस्यैवउपदे
ष्टव्यत्वादप्रयोजकत्वात्सुप्रसिद्धस्यापि अवश्यंध्यानोपदेशौकार्यावित्यत्रकल्पकाभा
वादिति ॥ सिद्धांतस्तु ॥ आत्मेत्युपासनंकार्यंसर्वथैवमुमुक्षुभिरित्यादिवचनेनान्वय
व्यतिरेकाभ्यां विष्णुरात्मेत्युपासनोपदेशयोःमोक्षहेतुत्वावगमेन मोक्षार्थोपासना
देःप्रसिद्ध्यप्रसिद्धिभ्यां कर्तव्यत्वाद्यसिद्धेः ॥ नित्यंसर्वथाआत्मत्वोपासनोपदेशौ
कार्यावेवेति ॥ फलंतुवेदानांस्वामित्वेन महातात्पर्यस्ययुक्तत्वसमर्थनं ॥ २ ॥ ॐ

[illegible]० नप्रतीकेनहिंसः ॐ ॥ पूर्वोक्तस्वामित्वोपासनाक्षेपेणेहपूर्वपक्षोदयात्संगतिः ॥ छां मु.अ.
८० दोग्येसप्तमेनाम ब्रह्मेत्युपास्तेवाचंवाचंब्रह्मेत्युपास्तइत्यादिरूपेण श्रुतनामवागादिश ४।१
द्वितोषास्वाहादिकं ब्रह्माभेदेनोपास्यमुततत्रस्थत्वेतिचिंता ॥ तदर्थं नामब्रह्मेत्यादि
श्रुतिरैक्याभिप्रायोतनाम्निब्रह्मेत्येवरूपेणतत्रस्थत्वाभिप्रायेति तदर्थं मिथ्योपासनम
पिपुमर्थहेतुरुतसत्योपासनामिति ॥ पूर्वपक्षस्तु ॥ नामवागादिकब्रह्मतयोपास्यं ना
मब्रह्मेतिसामानाधिकरण्यश्रुत्यातयोरैक्योपासनस्यश्रुतत्वात् ॥ नचपृथगुपदेशादित्य
त्रजीवब्रह्मभेदस्यसिद्धतया नामब्रह्मैक्यामिथ्यैवेतिचेन्न ॥ पूर्वत्रप्रसिध्यप्रसिध्योरप्रयो
जकत्वनपुमर्थहेतुत्वे नैवात्मत्वोपासनवदुपास्यवस्तुनः सत्यमिथ्यात्वयोरप्रयोजकेन १८०
यावन्नाम्नोगतंतत्रास्यकामचारोभवतीत्यादिवाक्यशेषश्रुतफलवत्वेन तथोपासनस-

भवादीति ॥ सिद्धांतस्तु ॥ अचेतनासत्यायोग्यान्यानुपास्यान्यफलत्वविपर्यया
भ्यामितिसांकर्षणसूत्रेणानुव्याख्यानोक्तवचनैश्चमिथ्योपासनाया अफलत्वविपरीत
फलत्वयोरुक्तया मिथ्योपास्तेःपुमर्थाहेतुतयातथोपास्तेरकर्तव्यत्वात् ॥ नामादिप्रा
णपर्यंतामित्यादिस्मृतिबलाच्चनाम्निब्रह्मेत्येव तत्रस्थत्वेनैवोपासनंकार्यंनत्वैक्येनेति ॥
फलंचुप्राग्युक्तात्मोपासनसमर्थनं ॥ ३ ॥ ॐ ब्रह्मदृष्टिरुत्कर्षात् ॐ ॥ पूर्वत्रनामब्रह्मे
तिप्रकृतब्रह्मत्वोपास्तेरत्रावश्यकत्वसाधनात्संगतिः ॥ अत्रप्रकृतंब्रह्मत्वंकिंसदासर्वथो
पास्यंनभवतिउतभवतीतिचिंता ॥ तदर्थं तस्यतथोपास्यत्वेहेतुर्नास्तिउतास्तीति ॥
पूर्वपक्षस्तु ॥ नब्रह्मत्वशब्दितस्योपासनंकार्यंसदासर्वथेति ॥ सिद्धांतस्तु ॥ ब्रह्मत्वे
सर्वगुणांतर्भावेन तस्यभगवदुत्कृष्टत्वरूपत्वेनेतरगुणेभ्योज्यायस्त्वेन तदुपास्तेर्भग

वत्प्रीतिविशेषहेतुत्वेनात्मत्वोपास्ते रिवएतद्रुपास्तेरभावेमोक्षासिद्धेश्चमोक्षहेतुभगवत्
प्रीतिविशेषजनकत्वात्सर्वदासर्वथैव ब्रह्मत्वमुपास्यंतच्चात्मब्रह्मेत्यात्मत्वविशेषणतयैवे
तिनचतुर्गुणोपास्तिनियमभंगइतिध्येयं ॥ फलंतुभूम्नोज्यास्त्वमित्युक्तसमर्थनमिति
॥ ४ ॥ ॐ आदित्यादिमतयश्चांगउपपत्तेः ॐ ॥ पूर्वत्रयद्विशेषणतया ब्रह्मत्वंध्येयमि
त्युक्तंतदात्मत्वमेवां गाश्रितत्त्ववन्नध्येयमितिशंकोदयात्संगतिः ॥ अत्रदेवानांस्वस्वो
त्पत्त्यंगाश्रितत्वेनोपासनंदेवैःकार्यमितियदुक्तमंगेषुयथाश्रयभावः इत्यत्रतत्किंदेवानां
सदासर्वथानकार्यमुतकार्यमितिचिंता ॥ तदर्थं तथाकार्यत्वेविशेषहेतुर्नास्त्युतास्ती
ति ॥ तथादेवानांभगवच्चक्षुराद्यंगेषुनित्यास्थितिर्नास्त्युतास्तीति ॥ पूर्वपक्षस्तु ॥ गुणां १८१
तरेषुसत्स्वपिविशिष्यस्वस्वाश्रयां गवत्वरूपगुणस्यैवनित्यमुपासनं ब्रह्मत्वोपासनइव

विशेषहेत्वभावात्सूर्यादिदेवानां जगत्प्रकाशनाद्यर्थविविधस्थानेषुसचरणन नित्यंभ
गवदंगेष्ववस्थित्यभावेन तथोपास्तेर्मिथ्योपास्तितयानर्थफलत्वाच्चनसदातथोपासनं
कार्यमिति ॥ सिद्धांतस्तु ॥ स्वोत्पत्त्यंगंचदेवानांविष्णोर्श्रित्यमितिस्मृत्यादेवानांमुक्तौ
भगवदंगप्रवेशस्यावश्यकतया तस्यचसदातादृशगुणोपासनेन विनासिध्यभावात् ॥
भगवदंगप्रवेशरूपकारणसत्वान्नित्यंरूपांतरेणभगवदंगेषुस्थितत्वेन मिथ्योपासनाप्रस
क्तेश्च स्वाश्रयचक्षुष्कतयासूर्येणचंद्राश्रयमनस्कतयाचंद्रेण ब्रह्माश्रितमूर्धतया ब्रह्मणे
त्येवंरूपेणदेवैःसदासर्वत्रकार्यमेवोपासनमिति ॥ फलंतुआत्मत्वोपासनसमर्थनमेव ॥
सत्यप्याश्रयाश्रयिभावेस्वस्वामिसंबंधस्यापि अनुपास्यत्वापातादितिशंकानिरासात्
॥ ५ ॥ ॐ आसीनःसंभवात् ॐ ॥ पूर्वसमुग्धतयोक्तोपासनस्यध्यानस्मरणभेदो

ा० क्तिपूर्वमितिकर्तव्यताकथनात्संगतिः ॥ उपविश्यासनेयुंज्यादितिषष्ठेगीतायांध्याना मु.अ.
८२ गत्वेन उक्तमासनादिकंकिंनावश्यकमुतावश्यकमितिचिंता ॥ तदर्थं आसनेनविनो ४।१
पासनोपयुक्तोहरौमनोनिवेशोयुक्तउतनयुक्तइति ॥ पूर्वपक्षस्तु ॥ भगवद्दृष्टिहेतूपा
सनस्यहरौमनोनिवेशमात्रेणोपपत्तेरासनंनावश्यकं ॥ नचासनेनविनाहरौमनोनिवेश
एवनयुक्तइतिवाच्यं ॥ प्रत्याहारादिनापितत्संभवात् ॥ अन्यथास्मर्तव्यःसततंविष्णु
रित्यादिविधीनामनुपपत्तिप्रसंगात् ॥ यदिचासनाद्युपदेशान्यथानुपपत्त्या तदावश्य
कत्वेच पर्वताग्रेनदीतिरेब्राह्मेमुहूर्तेउत्थायेत्याद्युक्त्यन्यथानुपपत्त्यात्मादिगवाप्तिनि-
यमोप्यावश्यकःस्यादिति ॥ सिद्धांतस्तु ॥ मनसोविक्षेपाभावेनहरौनिवेशस्यप्रत्या १८२
हारादिनासंभवेप्यचलंचेच्छरीरंस्यान्मनसश्चाप्यचालनमितिस्मृत्या शरीराचलत्वेन

पिमनसोविक्षेपाभावस्यावगमात् ॥ शरीराचलत्वस्यचासनएवसंभवात् ॥ समंकाय
शिरोग्रीवमित्यादिस्मृतिबलाच्चोपयुक्ततयासम्यग्भगवति मनोनिवेशनार्थमावश्यकमे
वासनं ॥ नचनित्योपासनस्यानावश्यकत्वस्यविरुद्धत्वादासनस्यावश्यकत्वेस्मर्तव्यः
सततमितिस्मृत्योपासनविधिविरोधः ॥ स्मरणध्यानरूपेणोपास्तेर्द्वैविध्येन स्मरणो
पासनस्यनित्यंकार्यत्वेन तत्रासनानियमेपिकादाचित्कध्यानरूपोपासनेतदावश्यक-
त्वविरोधाभावात् ॥ अतएवनासनाद्युपदेशवैय्यर्थ्यं ॥ नचैवंदेशविशेषादेरप्यावश्य
कत्वप्रसंगः ॥ आसनादिवत्ध्यानोपयोगितायावाश्रवणादिवद्दानोपयोगितायावा
भावात् ॥ तमेवदेशंसेवेतेत्यादिस्मृतेश्च ॥ यत्रैकाग्रताध्यानस्यसएवदेशादिग्राह्योन
पर्वताग्रादिनियमइति ॥ फलंतुआसनाद्युपदेशसार्थकत्वं ॥ ६ ॥ ॐ आप्रयणात्

भा० त्रापिहिदृष्टं ॐ ॥ पूर्वत्रविशेषाभावादासनमावश्यकंदेशविशेषादितुविशेषाभावा मु.अ.
८३ न्नावश्यकमित्युक्तं ॥ तद्वदिहापिध्यानाच्चेतिप्रकृतंध्यानंज्ञानपर्यंतमेव नतुतदनंतरम ४।१
पिमुक्तिपर्यंतमुक्तौ तत्कृतविशेषाभावादितिशंकोदयादत्संगतिः ॥ अत्रध्यानाच्चेति
प्रकृतंध्यानंकिं ज्ञानपर्यंतमेवावश्यकमुतमुक्तिपर्यंतमपीतिचिंता ॥ तदर्थं ज्ञानार्थंवि
हितस्यमुक्तिपर्यंतमनुष्ठाने हेतुर्नास्त्युतास्तीति ॥ तदर्थं मुक्तावानंदातिशयोध्याना
दन्येनापिभवत्युतध्यानेनैवेति ॥ पूर्वपक्षस्तु ॥ मुक्तावानंदवृद्धेर्ध्यानादन्येन श्रवणा
दिसाधनांतरेणापि संभवाज्ज्ञानार्थंविहितस्यमुक्तिपर्यंतमनुष्ठानेहेत्वभावान्मुक्तिपर्यंतं
ध्यानमनुष्ठेयमिति ॥ सिद्धांतस्तु ॥ योगारूढस्यतस्यैवशमःकारणमुच्यतेइतिगी
तायां योगारूढस्यापिमोक्षेज्ञानिनः शमोपरमसुखकारणमित्युक्त्याप्राधान्येन ध्यान १८३

स्यानंदवृद्धिहेतुत्वावगमात् ॥ प्रायणीतमोंकारमभिध्यायीतेतिश्रुतेः ॥ मुक्ताअपिह्ये
नमुपासतइतिश्रुत्युक्तकैमुत्यन्यायाच्चकार्यमेवमुक्तिपर्यंतंध्यानमिति ॥ फलंतुयावद
धिकारमित्यादौ उक्ततारतम्यसमर्थनं ॥ अन्यथामुक्तौज्ञानिनांध्यानफलाभावप्रसंगे
नतारतम्याभावापातादिति ॥ ७ ॥ ॐ तदधिगमउत्तरपूर्वाघयोरश्लेषविनाशौतद्व्य
पदेशात् ॐ ॥ एवंप्रासंगिकंसमाप्यकर्मक्षयाख्यं मोक्षस्वरूपमेवात्रोच्यतइत्यवसरसं
गतिः ॥ एवमुक्तिफलेतिपूर्वोक्तज्ञानान्मुक्तिरयुक्ताथयुक्तेतिचिंता ॥ तदर्थं मुक्तिप्र
तिबंधकानांज्ञानपूर्वापरभाविककर्मणां ज्ञानान्नाशादिकमयुक्तमुतयुक्तमितिचिंता ॥
तदर्थं नाशाद्यंगीकृतौ बाधकमस्त्युतनेति ॥ पूर्वपक्षस्तु ॥ एवमुक्तिफलानियमइत्य
त्रकर्मकृतप्रतिबंधभावेज्ञानान्मुक्तिर्भवत्येवेत्युक्तमयुक्तं ॥ ज्ञानात्पूर्वपश्चाच्चानुष्ठितक

र्मणांप्रतिबंधकीभूतानांनिवृत्त्ययोगात् ॥ तत्किंपूर्वकर्मणांभोगेननिवृत्तिरुताग्निनातू
लस्येवज्ञानेन नाशउत्तरेषामलेपः ॥ आद्येकिंतस्मिन्नेवदेहेतेषांभोगउतदेहांतरे ॥
अंतेपिकिंक्रमेणोतएकस्मिन्नेवजन्मनिकायव्यूहेनयुगपदेवभोगः ॥ नाद्यः ॥ बहुदेह
फलकर्मणांभावात् ॥ नद्वितीयः ॥ तथात्वेबहुकालांतरित ज्ञानस्यजीर्णबीजवन्मो
क्षहेतुत्वाभावापत्तेः ॥ नतृतीयः ॥ अनियतदेशकालविपाकत्वात् तादृशानामपियो
गप्रभावेनैकदेशकालयोरेवभोगइत्यंगीकारेच योगसामर्थ्याद्भोगाभावप्रसंगात् ॥
तद्भोगकालेषुपुनःकर्मांतरसंभवेनासमाप्तेश्च ॥ नचनकरोतिज्ञानी नहिकश्चित्क्षणमपि
जातुतिष्ठत्यकर्मकृदितिगीतोक्तिविरोधात् ॥ नचतुर्थः ॥ नाभुक्तंक्षीयतेकर्मकल्पकोटि
शतैरपीतिस्मृतिविरोधात् ॥ ज्ञानेनैवकर्मक्षयेज्ञानोत्पत्त्युत्तरकालमेवमोक्षापातात् ॥ १८४

किंचज्ञानिनःप्राचीनपुण्यकर्मणोपिज्ञानेनक्षयेसर्वापेक्षा च यज्ञादिश्रुतेरित्यत्रज्ञानोपयो
गोक्तिविरोधः ॥ उत्तरस्याश्लेषेचस्तुतिनयोक्तानंदातिशयहेतुत्वविरोधःस्यादिति ॥
अनेनैवन्यायेनानिष्ठादिकारणमिति वैराग्यपादीयैकादशाधिकरणेहरिद्विषां तमःप्रा
प्त्युक्तिरयुक्ताद्वेषप्रवृत्तितः ॥ प्रागूर्ध्वंसतांकर्मणांभोगेन वाद्वेषप्रवृत्त्यावानाशस्याद्वेषस्य
वायोगादिति ॥ सिद्धांतस्तु ॥ भोगेनकर्मणांक्षयायोगेपिज्ञानोदयानंतरंकर्मानुष्ठान
भावेपिज्ञानान्मोक्षोयुक्तएव ॥ ज्ञानेनपूर्वापरकर्मनाशाद्द्वेषाभ्युपगमान्नोक्तदोषः ॥
ज्ञानेनप्राचीनानामप्रारब्धशेषपापकर्मणां पुण्यमध्येप्यप्रारब्धानभीष्टकाम्यपुण्यकर्म
णामेवनाशोपगमेन तदन्यपुण्यपापयोर्भावेन नाभुक्तमितिस्मृतेस्तद्विषयतयातद
विरोधस्यज्ञानोत्पत्युत्तरक्षणएवमोक्षस्यप्राचीन पुण्यज्ञानोपयोगोक्त्याविरोधस्यचो-

न्या० पपत्तेः ॥ तथोत्तरस्यापिपापस्याशुचित्वाद्यनापादकत्वरूपाश्लेषस्याकाम्यपुण्यस्यच मु.अ.
१८५ मोक्षेसुखातिशयहेतुत्वस्यचोपगमेन स्तुतिनयोक्तिविरोधस्याभावात् ॥ प्रारब्धपुण्य ४।१
पापानामप्रारब्धकाम्यपूर्वोत्तराभीष्टपुण्यकर्मणांच भोगेनक्षपणसंभवाच्च ॥ अतोबा
धकाभावात्ज्ञानात्कर्मनाशादिकं युक्तमेतिज्ञानान्मोक्षोयुक्तएवएवंद्वेषिणोपिद्वेषपू-
र्तितः ॥ प्राक्कृताशेषाप्रारब्धपुण्यानां नाशस्योदीचीनांशेषपुण्यानामश्लेषस्यप्रारब्ध
पुण्यपापानांभोगेनक्षपणस्योपगमात् द्वेषिणस्तमःप्राप्त्युक्तिरप्युपपन्नेति ॥ फलंतु
प्रागुक्तप्रमेयसमर्थनंव्यक्तं ॥ ८ ॥ इतिश्रीमद्राघवेंद्रयतिकृतायां न्यायमुक्तावल्यां
चतुर्थाध्यायस्यप्रथमःपादः ॥ ॥ ॥ ॥ ॥ ॥ ॥ १८५

श्रीगुरुभ्योनमः ॥ हरिः ॥ ज्ञानिनोतःपदोक्तमोक्षफलायज्ञानभोगाभ्यां कर्मक्षयउक्त
पूर्वपादे ॥ अत्रतुकर्मक्षयसाध्यदेहक्षयक्रमउच्यते इतिपूर्वानंतर्यमस्यपादस्यध्येयं ॥
ॐ वाङ्मनसिदर्शनाच्छब्दाच्च ॐ ॥ ज्ञानिनांदेहक्षयोद्विविधः ॥ देवानांस्वोत्तमेषु
लयोन्येषांब्रह्मनाड्योत्क्रमेणेनेति ॥ तत्रदेवानामधिकार्युत्तमत्वादादौतेषामविभा
गोवचनादित्यतः प्राक्तनसप्तभिरधिकरणैर्देहलयोभिधीयते ॥ तत्रवाग्देव्याभगव
त्प्राप्तिलक्षणमोक्षाय मनोदेवोलयोशक्यनिर्णयोथशक्यनिर्णयइतिचिंता ॥ तदर्थं
मनोदेवस्योत्तमत्वं निर्णेतुमशक्यमुतशक्यमिति ॥ तदर्थं वाक्पूर्वरूपंमनउत्तररूपं
मनः पूर्वरूपंवागुत्तररूपमितिव्यामिश्रोक्तिर्वाङ्मनसयोरन्यजन्मोक्त्या समप्रधानभा
वपराउतान्यपरेति ॥ पूर्वपक्षस्तु ॥ श्रुतौव्यामिश्रोक्त्या द्वयोःसमप्राधान्यावगमेन

मनसउत्तमत्वनिर्णयायविपर्ययेणतुक्रमोतउपपद्यते चेत्यत्रस्वसृष्टतयास्वोत्तमदेवएव
लयस्यवाच्यत्वाद्वाचोमनोलयोशक्यनिर्णयइति ॥ सिद्धांतस्तु ॥ वाचोमनोवश्य
त्वस्यसर्वप्रत्यक्षसिद्धत्वान्मनसावाग्रेसंकल्पयत्यथवाचाव्याहरतीतिवाक्प्रवृत्तेः ॥ मनः
प्रवृत्तिपूर्वकत्वयुक्त्युपेततयाविशेषणाच्च ॥ मनसउत्तमत्वनिर्णयसंभवाद्वाग्देव्यामनो
देवेलयोस्त्येवेति ॥ नचव्यामिश्रोक्तिविरोधः ॥ तस्याःसंहितायाःपूर्वोत्तरवर्णदेवतात्वे
गुणप्रधानभावेचमांडव्यतज्ज्येष्ठपुत्रयोर्विवादपरत्वात् ॥ व्यक्तमेतत्त्रयभाष्ये ॥ फलंतु
पूर्वपक्षेवाग्देव्यामोक्षाभावेनानियमःसर्वेषामित्युक्त्याक्षेपः ॥ सिद्धांतेतत्समाधिः ॥
अत्रवाग्देवीवारुणीसुपर्णीच ॥ मनोदेवःशेषः ॥ सुपर्णश्चज्ञेयाःएतेनाग्नौसर्वेदेवाववि
लीयंते ग्निरिंद्रइत्यादिश्रुतिबलात्सर्वदेवानामपि स्वस्वोत्तमदेवेषुलयःसिद्धोभवति ॥

तत्रव्यामिस्रोक्त्यादिरूपबाधकाभावादिति ॥ अत्रटीकायांमनसिलियतेनवेतिसंदेह
वाक्ये इत्यनिर्णयोथलीयतएवेतिनिर्णयइतिशेषोवानोभयथापिसंभवतीति पूर्वपक्ष
प्रवृत्तिरितिवातस्याभिप्रायोध्येयः ॥ तेननपूर्वपक्षानानुगुण्यमितिशंकाकार्या ॥ १ ॥
ॐ तन्मनःप्राणउत्तरात् ॐ ॥ अत्राधिकरणत्रयेवाङ्मनसिलीयतइत्यादिश्रौतक्रमा
त्क्रमोध्येयः ॥ अत्रमनोदेवस्यप्राणदेवाद्गुत्पत्तिर्नास्त्युतास्तीति ॥ पूर्वपक्षस्तु ॥
प्राणदेवस्यचतुर्मुखस्य सर्वत्रप्रवृत्तिहेतुत्वमिवमनोदेवस्यापिशेषादेः सर्वत्रप्रवृत्तिकार
णत्वेन तत्तदनुभवसिद्धान्वयव्यतिरेकाभ्यांसिद्धतया चेष्टकत्वसाम्येमनोदेवस्यप्राण
देवादनूनबलवत्वान्नमनोदेवःप्राणेलीयते ॥ अतोनास्तिमोक्षः ॥ विपर्ययेणेत्यत्रो
क्तादिशाधिकबलएवन्यूनबलोलीयतइतिवक्तव्यत्वात् ॥ नचमनसःतत्रलयःशक्यः

तत्प्राक्श्रुतेश्चेतिसूत्रे मनसोभगवदुत्पत्त्योक्तेरिति ॥ सिद्धांतस्तु ॥ वाङ्मनसिसंप
द्यतइत्युक्त्या मनःप्राणइतिमनोदेवस्यप्राणदेवेसंपत्तिशब्दितलयश्रवणात् ॥ मनोदे
वोपिप्राणदेहे चतुर्मुखेवचनांतरबलाद्द्वाराद्वारालीयतएवमनउदक्रामत् इत्याद्यैतरेय
श्रुतौ ब्रह्मदेहान्मनोदेहस्योत्क्रमणप्रवेशयोरपि तद्देहपातोत्पातयोरभावस्य प्राणदे
वोत्क्रमणप्रवेशयोस्तद्भावस्यश्रवणेन मनोदेवादपिप्राणदेवस्याधिक्यावगमेन चेष्टक
त्वसाम्याभावाद्भगवदुत्पन्नत्वस्य वियत्पादीयन्यायेन प्राणदेवद्वारोपपत्त्या वायोर्वा
वरुद्रउदेतीतिश्रुत्याच मनसःप्राणजत्वान्नास्तिमनसोमोक्षइति ॥ फलंतुपूर्ववत् ॥२॥
ॐ सोध्यक्षेतदुपगमादिभ्यः ॐ ॥ अत्रश्रौतक्रमाद्वापूर्वनयद्वयफलाक्षेपाद्वासंगतिः ॥ १८७
अत्रप्राणपदोक्तोविरिंचिः भगवत्प्राप्तिरूपमोक्षाय हरौनलीयतेथलीयतइतिचिंता ॥

तदर्थं तस्येशाधीनत्वनिश्चयेनास्त्युतास्तीति ॥ तदर्थं प्राणस्वातंत्र्यश्रुतिबाहुल्यं
अनद्यमानत्वेसतांमाहात्म्यंचनिरवकाशमुतसावकाशमिति ॥ पूर्वपक्षस्तु ॥ नप्राणः
किंचिदाश्रितइति ॥ यस्मिन्निदंसर्वमध्याप्नोदिति ॥ प्राणस्यैतद्वशेसर्वंत्रिदिवेयत्प्र
तिष्ठितमिति ॥ वायुनावैगौतमसूत्रेणेत्यादिश्रुतिबाहुल्येन प्राणस्यानन्याधीनत्वा
वगमेनेशाधीनत्वानिश्चयान्नतत्रविरिंचिस्यलयः ॥ नचानन्येश्वरताप्राणेतदन्येश्वरव
र्जनमित्युक्तदिशा विष्णवन्येश्वरवर्जनपरत्वेन श्रुतीनांसावकाशत्वंशंक्यं ॥ बहु
त्वप्रयुक्तप्राबल्योपेतानांश्रुतीनामनन्येत्यादिदुर्बलवचनेन गत्यंतरकल्पनायोगात् ॥
अनद्यमानइतिप्राणस्यलयाभावोक्तेश्चेति ॥ सिद्धांतस्तु ॥ अस्त्वेवंप्राणपदोक्तवि
रिंचिस्यहरौलयः प्राणस्यास्वातंत्र्येश्रुतिप्राबल्यस्येशाधीनत्वेपि प्राणःपरस्यांदेवता

यामितिप्राणःपरमुपगच्छतीति प्राणःपरमनुप्राणितीत्यादिश्रुतिबाहुल्यस्यसत्वात् ॥
नचसाम्येनेशाधीनत्वेनिर्णयः॥ स्वातंत्र्यश्रुतीनांसर्वेप्राणमुपगछंतिप्राणंदेवा अनुप्रा
णंति अनन्येश्वरताप्राणेतदन्येश्वरवर्जनमित्यादिवचनबलेन रुद्रादिसर्वजीवोपजीव्य
त्वभगवदन्येश्वरवर्जनपरत्वेनसावकाशत्वात् ॥ अनद्यमानत्वस्येशादन्यैरनद्यमानत्वे
नोपपत्तेरिति ॥ प्राणस्तेजसीतिश्रुतौ तेजसिश्रीतत्त्वेप्राणस्यलयश्रवणंतु प्राणस्यतेज
सिलयोमार्गमात्रमितिस्मृत्या तत्प्राप्तिमात्रपरं॥ नतत्रलयपरं ॥ विरिंचस्यसाक्षात्पर
मात्मनिलययोग्यत्वात्प्राणस्येवतत्रलयइतिज्ञेयं ॥ चक्षुरादिवत्तुतत्सहसिष्ट्यादिभ्य
इत्यत्रप्राणस्येशवशत्वोक्तावपि इहस्वातंत्र्येश्रुतिबाहुल्यविशेषाशंकेतिनगतार्थता ॥
फलंतुपूर्वपक्षेविरिंचस्यलयाभावेमोक्षाभावेन तदनुप्रविष्टानामशेषज्ञानिनामपिमोक्षा

भावेन पूर्वोक्तनयद्वयाक्षेपद्वारा अनियमइत्युक्ताक्षेपात्सिद्धांतेतत्समाधिरिति ॥ ३ ॥
ॐ भूतेषुतच्छ्रुतेः ॐ ॥ पूर्वोक्ताक्षेपेणात्रशंकनात्संगतिः ॥ वाङ्मनसीत्यादिश्रुतौ
विशिष्योक्तेभ्योन्येदेवाः भगवत्प्राप्तिरूपमोक्षायाकिमेकस्मिन्भूतमानिनिलीयंतेथ-
भूतांतरमानिष्वपीतिचिंता ॥ तदर्थं मग्नौसर्वेदेवाविलीयंतइतिश्रुतिः प्रतीतार्थनि
र्णायकाभवतिनवेति ॥ तदर्थं भूतांतरमानिषुलयेप्रमाणंनास्तिप्रागुक्तन्यायश्चानिर्णा
यकउतास्तिप्रमाणंप्रागुक्तन्यायश्चनिर्णायकइति ॥ पूर्वपक्षस्तु ॥ अग्नौसर्वेदेवाइति
श्रुतेरग्निदेवएवसर्वेदेवा विलीयंतेन्यत्रापिलीयंतइत्यत्रप्रमाणाभावाच्च योयन्नियतः
सतत्रलीयतइतिप्रागुक्तन्यायस्य नियामकानांबहुत्वेनानिर्णायकत्वात् ॥ प्रागुक्तस्व
स्वनियामकेलयइत्येतद्युक्तमिति ॥ सिद्धांतस्तु ॥ भूतेषुदेवाविलीयंतइतिभाष्यो

क्तश्रुत्या पंचस्वपिभूतमात्रिषुयथास्वस्वनियामकदेवाविलीयंतेनियामकानां बहुत्वे प्यग्नौसर्वेदेवाविलीयंतेऽग्निरिंद्रेइंद्रउमायां उमारुद्रइत्यादिश्रुत्युक्तदिशा निर्णयसंभवेन प्रागुक्तन्यायस्यानिर्णायकत्वाभावादिति ॥ फलंतुप्रागुक्ताक्षेपसमाधी ॥ ४ ॥ ॐ नैकस्मिन्दर्शयतोहि ॐ ॥ अत्रापिपूर्वाक्षेपेणाशंकनात्संगतिः ॥ पूर्वप्रकृतदेवाःभगवत्प्राप्तिलक्षणमोक्षायकिंमग्नावेवलीयंतेथपंचस्वपीतिचिंता ॥ भूतेषुदेवाविलीयंतइति प्रागुक्तश्रुतिःसावकाशाथनिरवकाशेति ॥ तदर्थमग्नौसर्वेदेवाइतिश्रुत्यन्यथानुपपत्ति निरवकाशेतसावकाशा ॥ तदर्थं पचस्वपीत्यत्रविशेषप्रमाणंनास्त्युतास्तीति ॥ पूर्वपक्षस्तु ॥ पंचस्वपीत्यत्रविशेषप्रमाणाभावेनाग्नाविति श्रुत्यन्यथानुपपत्तेर्गत्यंतरकल्पकाभावात्निरवकाशतयाभूतेष्विति बहुवचनांतश्रुतेरग्नौदेवानांलयेप्यग्निःस्वजनकवा

यौवायोश्चस्वजनकाकाशेलयेन परंपरालयाभिप्रायेणसावकाशत्वकल्पनादग्नावेवसर्वदेवानांलयइतिपंचस्वपिलयइतिप्रागुक्तमयुक्तमिति ॥ सिद्धांतस्तु ॥ पृथिव्यामृभवो विलीयंतइतिऋभवः पृथिव्यामितिचभाष्योक्तविशेषप्रमाणाभ्यां प्रत्येकंपंचस्वपिभूतमात्रिषुऋभुप्रभृतिदेवानांलयश्रवणादग्नौ सर्वेदेवाइतिश्रुतेरग्नावग्नयोवायाविंद्रइत्यादिश्रुतौ निर्दिष्टाग्निपुत्राणांप्रायेणाधमानां सर्वेषांभूतांतराप्रवेशिनां ( नयदिवयत्वेन )सावकाशतयाभूतेष्वितिश्रुतेःपरंपरया लयाभिप्रायरूपामुख्यार्थताकल्पकत्वायोगान्निरवकाशभूतेष्वितिप्रागुक्त श्रुत्यापंचस्वपिभूतमात्रिषुदेवानां प्रागुक्तपंचस्वपिलयइत्येतद्युक्तमिति ॥ फलंव्यक्तं ॥ ५ ॥ ॐ समनाचासृत्युपक्रमादमृतत्वंचानुपोष्य ॐ ॥ तदधीनत्वयुक्तविशेषश्रुतिभ्यांप्राग्गुक्तसिद्धांतन्यायेनात्रशंकनादापवादकीसं

।० गतिः ॥ प्राणादुत्तमत्वेनबुद्धिस्थतया प्रकृताश्रौतक्रमेणवाप्रकृताचित्प्रकृतिर्भगवति सु.अ.
१० लीयतेनवेतिचिंता तदर्थं प्रागुक्तयुक्तिः ॥ तेजःपरस्यामितिविशेषश्रुतिद्वयमपि ४।२
निरवकाशमुतसावकाशमिति ॥ तदर्थं कामादित्यत्रोक्तमसंसारित्वं प्रकृतेरयुक्तमुत
युक्तमिति ॥ तदर्थं मुक्तत्वंतस्याः किमागंतुकमुतस्वाभाविकमिति ॥ स्वाभाविक
त्वेभगवतासर्वसाम्यमापतत्युतनेति ॥ पूर्वपक्षस्तु ॥ भगवदधीनत्वतेजइतिश्रुतिभ्यां
सापिहरौलीयतएव अन्यथावागादीनां मनःप्रभृतिषुताभ्यां मुक्तलयोपिनस्यात् ॥
असंसारित्वाल्लयाभावस्यैवानुपपत्तेः नचनित्यमुक्तत्वाद्युक्तंतस्यागंतुकत्वात् ॥ स्वाभा
विकत्वेभगवतातस्याःसर्वसाम्यापातात् ॥ नित्यसंसाररराहित्येगुणांतरेसर्वसाम्यस्या
पातादिति ॥ सिद्धांतस्तु ॥ दौवावसृत्यनुपक्रमौप्रकृतिश्चपरमश्चेतिभाष्योक्तश्रुतौ ११०

परमपुरुषवत्सर्वंगतत्वनित्यत्वयुक्तिभ्यां कदापिसंसाराभावस्यतद्धेतुकनित्यमुक्तत्व-
स्योक्त्या भगवदुपासनासाध्यतया मुक्तत्वस्यस्वाभाविकत्वात्तादृशमुक्तिमत्याश्चदे
व्याहरेरिवदेहत्यागरूपलयायोगान्नप्रकृतिर्लीयते तदधीनत्वाद्वागादिवत्स्वोक्तमेतु-
हरौलीयतइत्यभिप्रेतानुमानं संसारित्वोपाधिग्रस्तं ॥ तेजइतिश्रुतिरपिहरेरत्यंतसा
मीप्यं लयोलक्ष्म्याःप्रकीर्तितइतिवचनादतिसामीप्यार्थतयोपपत्त्या प्रकृतेरीशेसर्वसा
म्यापातम्यचतदपीतेः ॥ सूक्ष्मंतु ॥ अस्यैवचेतिसूत्रत्रयोक्तेर्मोचकत्वामोचकत्व पर
मसुखत्वसुखवत्वज्ञानानंदादिगुणपरिमाणाधिक्यन्यूनत्वोष्मावत्वानुष्मावत्वहेतुभि-
र्निरासात्सर्वसाम्याभावे ब्रह्मादेरिवनित्यमुक्तत्वादिनापिसाम्यंनस्यादितिचोद्यस्थ-
नोपमर्देनेतिसूत्रेभगवद्विशेषगुणानुपमर्देनैवदेशकालव्याप्त्यादि किंचित्साम्यस्यैव

प्रमाणसिद्धत्वोक्त्यानिरासान्नसा ( समेोदावषपरे ) इतिश्रुतीहरेःसाम्यनिषेधविरोधः तस्यप्रतिषेधादित्यादिसूत्रत्रयोक्तदिशाजीवविषयत्वादिति ॥ फलंतुपूर्वपक्षेदेव्याःसंसारित्वाद्भगवति लयसद्भावादधिकारित्वेनाधिकारिणामियदामननादित्यत्रोक्तप्राणावधित्वाक्षेपः ॥ सिद्धांतेतत्समाधानं ॥ ६ ॥ ॐ तानिपरेतथाह्याह ॐ ॥ पूर्वत्र विलीनःपरमेह्यमृतत्वमेतीत्युक्तावस्त्वमृतत्वं ॥ सोध्यक्षइत्युक्तस्यप्राणस्यनभुतेषुदेवा विलीयंतइत्युक्तदेवानेतिशंकनात्संगतिः ॥ भूतेषुदेवाविलीयंतइत्युक्तदेवाभगवतिन लीयंतेथलीयंतइतिचिंता ॥ तदर्थं किमेतेप्राणपदोक्तचतुर्मुखप्रतिबिंबाउतभगवत्प्रतिबिंबा अपीतितदधीनत्वेसतितत्सदृशत्वरूपप्रतिबिंबोहिस्वनियामकेबिंबे लीयतेदेवाश्चप्रतिबिंबोहरेः प्राणःप्राणस्यान्येकलाःक्रमादितिवचनेन प्राणस्यैकस्यैवभगवत्प्र





तिबिंबत्वात्तस्यैकस्यैवतत्रप्रवेशरूपमोक्षोनान्येषां ज्ञानिनामित्यनियमःसर्वेषामित्युक्तमयुक्तमितिप्राप्तेक्रमात्प्राणबिंबत्वेपिदेवानां सर्वेदेवाःप्राणमाविश्यदेवमुक्तालयेपरमं-यांतीतिश्रुत्या प्राणद्वारापरमात्मनिप्रवेशोपपत्तेः ॥ भगवत्प्रतिबिंबविरिंचप्रविष्टानांविरिंचस्येश्वरप्रवेशेपरमात्मप्रवेशस्यापरिहार्यत्वात् ॥ आभासएवंचेतिसूत्रोक्तदिशासामान्यतोशेषजीवानामुक्तरूपप्रतिबिंबत्वाच्चास्ति तत्रप्रवेशरूपमोक्षइत्यनियमइत्युक्तंयुक्तमिति ॥ फलंतुव्यक्तं ॥ ७॥ ॐ अविभागोवचनात् ॐ ॥ पूर्वाक्षेपेणात्रशंकनात्संगतिः ॥ पूर्वाधिकरणेमोक्षवत्वेनोक्ताःदेवाःकिंमुक्तौस्वतंत्राःउतेशाधीनाइतिचिंता ॥ तदर्थमन्याधीनत्वेसंसारदुःखादिप्रसंगःश्रौतसत्यकामत्वाद्यभावप्रसंगश्चास्त्युतनेति ॥ मुक्तानांपराधीनत्वे संसारदुःखादिप्रसंगात् ॥ एतेदेवाएतमात्मानमनुविश्यसत्या

ा० सत्यकामाः इत्यादिश्रुत्युक्तसत्यकामत्वाद्ययोगाच्च नमुक्ताःपराधीनाइति ॥ प्रागु मु.अ.
९२ क्तमीशाधीनत्वादिरूपंप्रातिबिंबत्वमयुक्तमिति प्राप्तेकामेनमेकामआगादितिमुक्तानां ४१२
सत्यकामत्वमितिश्रुतिस्मृतिभ्यां श्रौतकामत्वादेरीशेच्छानुसारेणेत्यंगीकार्यत्वेन स्व
तोभावायसत्यकामत्वादेरीशेच्छानुसारित्वादेवदुःखादिप्रसक्तेरप्यभावात्कामिताला-
भप्रयुक्तत्वाद्दुःखादेर्भगवदिच्छानुसारेण कामयमानानांमुक्तानां कामितालाभाभावा
दीशाधीनाएवमुक्तावपिज्ञानिनइतिप्रागुक्तंयुक्तमितिसिद्धांतः ॥ फलंतुव्यतिहारइत्या
दिसूत्रोक्तविष्णूत्तमत्वाद्याक्षेपसमाधी ॥ ८ ॥ ॐ तदोकोग्रज्वलनंतत्प्रकाशितद्वारो
विद्यासामर्थ्यात्तच्छेषगत्यनुस्मृतियोगाच्चहार्दानुगृहीतःशताधिकया ॥ ॐ पूर्वत्राधि १९२
कार्युत्तमक्रमेणादौदेवानां स्वस्वोत्तमेषुदेहलयान्मोक्षःसापवादः ॥ सप्तभिर्नयैरुक्तः

अत्रतुनयेमनुष्याणा मुत्क्रमणेनभगवत्प्राप्तिरूपमोक्षउच्यतइतिपूर्वपेटिकयास्यसंगति
र्ध्येया ॥ अत्रज्ञानिनांदेहादुत्क्रांतिरज्ञमृतिवदेवाथज्ञानशक्त्याततोविलक्षणेतिचिंता ॥
तदर्थं ज्ञानंकिंतन्मृतेर्विलक्षणतासंपादनाशक्तमुतशक्तमिति ॥ तदर्थं प्रारब्धकर्मशेषो
ज्ञानशक्तिप्रतिबंधकोभवत्युतनेति ॥ तदर्थं किंज्ञानंस्वोदयात्फलदानसमर्थंकिंवाकर्मा
वसानएवेति ॥ तदर्थं स्वोदयात्फलदानशक्तिस्त्वेतिप्रसंगोस्त्युतनेति ॥ पूर्वपक्षस्तु ॥
स्वोदयमारभ्यैवज्ञानस्याज्ञमृतेर्वैलक्षण्यरूपफलदानशक्तत्वे ज्ञस्यादिमृतेरपिअज्ञमृति
तोवैलक्षण्यसंपादकत्वापातेन प्रारब्धावसानएवफलदानशक्तःनतुतस्मिन्सतीतिवा
च्यत्वादादेहमितिवचनेन देहपातपर्यंतंविद्यमानप्रारब्धप्रतिबद्धशक्तिकंज्ञानंनाज्ञमृ
तितोज्ञानिमृतेर्वैलक्षण्यसंपादकं ॥ नचमृतिकालेप्रारब्धंनेतियुक्तं ॥ अज्ञमृतेरिवप्रार

।० ध्यनिबंधनत्वात् ॥ स्वोदयात्फलदंज्ञानमितितुफलांतरपरंनेयमिति ॥ सिद्धांतस्तु ॥ मु.अ.
३ स्यादेवंयदिज्ञानमात्रमेववैलक्षण्यसंपादकं ज्ञानिमृतेरित्यंगीकुर्मस्तदास्यादेवातिप्रसं ४।२
गः ॥ नचैवंकिंतुस्वहृदयमारभ्यभगवत्प्राप्तिपर्यंतंविद्यमानमार्गस्मृतिसाहितं विद्याप्र
संनहृद्गतभगवदनुग्रहसाहितं ॥ एवंचतथातद्द्वयंचकर्मावसानएवत्वरातिनान्यदेतिना
तिप्रसंगोतस्तदुभयंसहकृतंज्ञानमज्ञानमृतितोज्ञानमृतेर्वैलक्षण्यसंपादकंभवत्येवेति ॥
ज्ञानपादोक्तज्ञानसामर्थ्ययुक्तमेवेतिफलंध्येयं ॥ वैलक्षण्यप्रकारश्चहृद्गतभगवत्प्रकाशेन
प्रकाशितद्वारयाब्रह्मनाड्यायावद्देहभाविसूर्यरस्मिभिरंतव्याप्तया ज्ञानिनोनिर्गमनंज्ञा
नस्येतितत्प्रकाशितद्वारइत्यादिसूत्रेभाष्याद्युक्तदिशाज्ञेयः ॥ अत्रयद्यपिज्ञानिनोऽस्त्यु ११३
त्क्रमणमितिसामान्यतःप्रसिद्धौ किमज्ञमृतितोविलक्षणमुतनेतिचिंतायुक्ता ॥ तथा

पिवियत्पादेजन्मोत्तयैवलयं सिद्धवत्कृत्यसृष्टिक्रमेणोतवैपरीत्येनेतिचिंतावदिहापि-
देवानामन्योन्यप्रवेशेन देहलयोक्तौतदन्येषांदेहादुत्क्रमणमिति लब्धमेवेतिसिद्धव
त्कृत्येयंविशेषचिंतेतितनदोषः ॥ ९ ॥ ॐ योगिनःप्रतिस्मर्यतेस्मार्तेचैते ॐ ॥ पूर्वा
क्षेपेणशंकनात्संगतिः ॥ पूर्वत्रप्रधानांगभावेन प्रकृतंविद्यागतिस्मरणंचेत्येतदुभयंग
त्यर्थंनावकश्यमुतावश्यकमितिचिंता ॥ तदर्थमग्निर्ज्योतिरहःशुक्लमित्यादिस्मृतिर्लो
कानुसारेणसहायसतीकालमृत्यधीनत्वपरा ॥ यंयंचापीतिस्मृतिःलिंगदर्शनं नलो
कानुसारादन्यथानेयमुताग्निरित्यादिस्मृति र्विद्याद्यधीनत्वपरायंयमितिवचनमन्यथा
नेयामिति ॥ पूर्वपक्षस्तु ॥ अग्निर्ज्योतिरहश्शुक्लमितिस्मृतौ धूमोरात्रिरितिस्मृतौच ॥
ब्रह्मप्राप्तिचंद्रप्राप्तिगत्योः क्रमादहरादिरात्र्यादिकालमृत्यधीनतावगमाल्लोकेफलानुस्मृ

तिविनापिफलप्राप्तिदर्शनाच्च नगतिप्राप्त्यर्थमितिस्मृतिर्विद्याद्यपेक्षिता किंत्वहरादि
कालस्मृतिरेव ॥ नचयंयंवापिस्मरन्नितिस्मृतौ स्मृतिविषयस्यैवप्राप्यत्वोक्तेस्तद्विरो
धतया आचार्यस्त्वितेगतिवक्तेतिस्मृतार्थगत्युक्तिरूपलिंगविरोधश्चैवंसतिप्राप्नोतीति-
शंक्यं ॥ देहत्यागक्षणेदुःखेनस्मरणाच्छाभ्यादिनापूर्वं जानन्नितिज्ञानमात्रार्थत्वेन स्मरं
नित्यस्यनेयत्वात् ॥ एतेनलिंगदर्शनमपिप्रत्युक्तं ॥ ज्ञानार्थतयातदुपदेशोपपत्तेः ॥
अन्यथालोकानुसरणविरोधादिति ॥ सिद्धांतस्तु ॥ आद्यस्मृतौब्रह्मविदइतिधूमइति
स्मृतौ योगीतिचविशेषणाच्च ॥ ताभ्यांज्ञानकर्मरूपोपायसाध्यत्वप्रतीत्याकालमृत्य
धीनत्वाप्रतीतेर्विद्यादिकमवश्यमपेक्षितमेव ॥ अन्यथास्मृत्योस्तादिशेषणवैयर्थ्यापा
तात् ॥ अहरादेरभिमानिनयन्यायेन देवतात्वकालत्वाभावाच्च यंयंवापीतिस्मृतौ

मु.अ.
४।२

त्यागक्षणेस्मृतस्यैवप्राप्यत्वोक्तेर्गतिस्मृतिरप्यावश्यकी ॥ नचतत्क्षणेदुःखेनस्मृत्ययोगः
महात्मनां देहेसदाहेयत्वबुद्धिभावेन तदादुःखाभावात् ॥ पामराणामपिकालएवदुः
खाभावेन तत्क्षणेदुःखाभावाच्च ॥ नचलोकाननुसारित्वदोषः ॥ लोकेफलप्राप्तौकर्ष
णादिक्रियानुवृत्तेर्दर्शनेनेहापिस्मृतिरूपक्रियानुवृत्त्यंगीकारात् ॥ लोकेक्रियाकर्षणा
दिरूपा ॥ अत्रतुमानसीतिअवांतरवैलक्षण्यमात्रं तावतातदनुसारिताशंकनीया ॥
अतिप्रसंगात् ॥ तेनलिंगदर्शनमपिनान्यथानेयमिति ॥ फलंतुज्ञानस्यचतुर्विधमो
क्षहेतुत्वाक्षेपसमाधी ॥ १० ॥ इतीश्रीमत्सुधींद्रपूज्यपादशिष्य श्रीमद्राघवेंद्रयति
कृतायां न्यायमुक्तावल्यां चतुर्थाध्यायस्यद्वितीयःपादः ॥ ॥ ॥ ॥

॥ श्रीवेदव्यासायनमः ॥ हरिः ॐ पूर्वत्रब्रह्मनाड्योत्क्रांतानां ब्रह्मप्राप्तौयद्गतिस्मरणं
विद्यांगतयोक्तं सागतिस्तद्गम्यंचात्रोच्यतइतिपूर्वपादानंतर्यमस्याध्येयं ॥ नचगतिग
म्ययोर्द्वयोरप्युक्तौपादभेदप्रसंगःशंक्यः ॥ चरमगम्येनसहितस्यैवमार्गत्वेनमार्गरूपै
कार्थत्वेपिमार्गैकदेशचरमगम्यस्य पृथक्विवक्षयागम्यंचोच्यतइत्युक्तेः ॥ ॐ अर्चि
रादिनातत्प्रथितेः ॐ ॥ पूर्वत्रयद्गतिस्मरणमावश्यकमित्युक्तंसागतिः किंअर्चिर्वा
यूभयप्राथमिकार्चिःप्राथमिकावेतिचिंता ॥ तदर्थं श्रुतिद्वयंनिरवकाशमुतसावकाश
मिति तदर्थमुभयप्राथम्यंगतेरविरुद्धमुतविरुद्धमिति ॥ तदर्थं साकिंद्विरूपैकैकरूपे
तिगतेराधिकारिभेदेनाक्षिप्तयोर्द्वयोरपिप्राथम्याविरोधेन निरकाशोतसावकाशोति ॥
तेर्चिषमभिसंभवंतिसवायुमागच्छतीति श्रुतिद्वयेनार्चिर्वायूभयप्राथमिकागतिरिति–

प्राप्तेसिद्धांतः ॥ द्वावेवमार्गौप्रथितावर्चिरादिविपश्चितां ॥ धूमादिःकर्मिणामि
तिस्मृतावेकमार्गः सचार्चिरादिकएवनतुवाय्वादिकइतिप्रथितपदेनप्रसिद्धत्वोक्त्या-
तेर्चिषामितिश्रुतेः प्राबल्यात्तदनुरोधेनार्चिर्नामिकदेवताप्राथमिकैकैवब्रह्मगतिर्नाने-
का ॥ सवायुमागच्छतीतिश्रुतिस्तुप्रकृतश्रुत्यनुरोधेनार्चिरनंतरमंतराप्राप्त्यर्थतयोपप
न्ना ॥ शिष्टंटीकायां ॥ फलंत्वधिकारिभेदेनमार्गद्वयस्य व्यवस्थितत्वेपिअहमत्राधि
कारीत्यनिर्णयाद्द्वातिस्मृत्यनुपपत्तिस्तत्समाधिश्चेति ॥ १ ॥ ॐ वायुशब्दादविशेष
विशेषाभ्यां ॐ ॥ पूर्वत्रब्रह्मप्राप्तिमार्गेप्रथमप्राप्तिदेवतानिर्णयःकृतः ॥ अत्रद्वितीयप्रा
प्यदेवतानिर्णयःक्रियतइतिसंगतिः पूर्ववैषम्येणशंकनात्संगतिः ॥ पूर्वप्रकृतार्चिरादि
मार्गेवायुदेवताहर्देवतेत्युभयंद्वितीयप्राप्यमुतवायुदैवतमेवेतिचिंता ॥ तदर्थं सवा

युमित्यर्चिषाहहरितिश्रुतिद्वयं द्वयोर्द्वीतीयप्राप्यत्वप्रापकंभवत्युतनेति ॥ तदर्थं किं मु.अ.
द्वौमार्गावुतैकएवेति ॥ पूर्वपक्षस्तु ॥ पूर्वत्रद्वावेवमार्गाविति विशेषवचनेनार्चिषएव ४।३
प्राथम्यावगमेपीहवायोरेवद्वीतीयप्राप्यत्वे विशेषवचनाभावादर्चिषोहरितिसवायुमि
तिश्रुतिद्वयस्यापिप्रामाण्यान्मार्गभेदेनद्वयोरपि द्वितीयप्राप्यत्वेविरोधाभावाछ्रुतिद्व-
यबलादहर्वायूद्वावपिद्वितीयप्राप्याविति ॥ सिद्धांतस्तु ॥ सवायुमागच्छतीतिसामा
न्यवचनेन वायोश्चप्राप्तप्राथम्यस्य द्वावेवमार्गौप्रथिताविंत्युक्तप्रसिद्धविरोधेन त्यागे
पिद्वीतीयप्राप्यत्वस्यन्यायप्राप्यत्वात्सइतोगतोद्वितीयांगार्तिं वायुमागच्छतीतिविशे
षश्रुतेश्चवायुरेवद्वितीयप्राप्योहस्तदनंतरप्राप्यामितिमार्गद्वयेन द्वयोर्द्वितीयप्राप्यत्वंत
द्वावेवेतिवचनोक्तप्रसिद्धिविरोधादेवबाधितामिति ॥ फलंतुपूर्वत्रैवेति ॥ २ ॥ ॐ १।१६

तटितोधिवरुणःसंबंधात् ॐ ॥ तेर्चिषमभिसंभवंत्यर्चिषोहरन्हआपूर्यमाणपक्षमापूर्य
माणपक्षाद्यान्षडुदंङेतिमासान्मासेभ्यः संवत्सरमित्यादिछंदोगश्रुत्याद्युक्तब्रह्मप्राप्ति-
मार्गेयत्रविवादस्तदाद्यंद्वीतीयंच प्राप्यंनिर्णीतमन्यत्रसंवत्सरपर्यंतंक्रमप्राप्येषु विवा
दाभावान्निर्णयएव संवत्सरादनंतरंप्रजापतिलोकंगंतुकिंतटिद्वरुणौद्वावपिमार्गभेदेन
प्राप्यावुतमार्गैक्येनतटिल्लोकंप्राप्यवेतिचिंता ॥ तदर्थं संवत्सराद्वरुणलोकमितिसं
वत्सरात्तटितमितिचश्रुतिद्वयं तदुभयप्राप्तिप्रापकं नवेतिनेत्यत्रप्रमाणं नास्त्युतास्ती-
ति ॥ पूर्वत्रद्वितीयांगतिंवायुमितिविशेषवचनेन वायोर्द्वितीयप्राप्यत्वनिर्णयेपीहता
दृशप्रमाणाच्छ्रुतिद्वयप्रामाण्यादाधिकारिभेदाधीनद्वयोरपिप्राप्यत्वोपपत्तेः द्वावपिलो
कौसंवत्सरमानिलोकादनंतरंप्राप्याविवितिपूर्वपक्षे ॥ सिद्धांतस्तु ॥ तटितोवरुण

गच्छतितटिताद्यूह्येतवरुणलोकेविशेषश्रुत्या तटिदनंतरमेवसयुक्तिकंवरुणलोकस्य
प्राप्यत्वोक्तेर्मार्गद्वयस्यचद्वावेवत्यत्रोक्तब्रह्मप्राप्तिमार्गैक्यप्रसिद्धिविरोधयुक्ततयाद्वयो
रेकस्मिन्मार्गेयुगपत्प्राप्यत्वविरोधेन श्रुतिद्वयस्यद्वयोःपौर्वापर्येणैवप्राप्तिप्रापकत्वार्थ
कत्वस्यावश्यंभावात्पूर्वंतटिल्लोकं प्राप्यपश्चाद्वरुणलोकंप्राप्नोतीति ॥ फलंतुमार्गा
निर्णयात्तदनुस्मृत्यनुपपत्तिरितिसमाधी ॥ ३ ॥ ॐ आतीवाहिकस्तल्लिंगात् ॐ ॥
पूर्वत्रभिन्नवाक्यगतभिन्नपदार्थयो स्तटिद्वरुणयोरपौर्वापर्योक्तावत्रैकवायुशब्दार्थयो
रातिवाहकमुख्ययोःपौर्वापर्यमुच्यतइतिसंगतिः ॥ द्वितीयांगतिंवायुमागच्छतीति
श्रुतौवायुःकिमातिवाहकोथमुख्यवायुरितिचिंता ॥ तदर्थ मातिवाहिकत्वेमुख्यस्य
प्राप्यत्वंनप्राप्नोत्युतप्राप्नोतीति ॥ तदर्थं द्योर्वावविद्युत्तत्पतिं वायुमागम्यतेन ब्रह्मग १९७

च्छतीतिश्रुतवायुशब्देमुख्योवातिवाहिकोवेतिसंदेहेन प्राक्तनेपिसंदेहादनिर्णयअथ
मुख्यइत्यनिर्णयइति ॥ पूर्वत्रतटितोवरुणंगच्छतीतिसयुक्तिकवचनबलेन पौर्वा
पर्यनिर्णयोपीह पूर्वआतिवातिकचरमोमुख्यइतिवापूर्वोमुख्यश्चरम आतिवाहिकइ-
तिवासंदेहे निर्णयाभावात्पूर्वस्यातिवाहिकत्वज्ञापकाभावात्सोमार्गेद्वद्भुवानामपिमा
र्गेक्रमात्प्राप्तत्वोक्त्या तारतम्यक्रमस्यात्राविवक्षितत्वेन मुख्यस्यापिद्वितीयप्राप्यत्वसं
भवान्मुख्यासत्वाच्चमुख्यवायुरेवद्वितीयप्राप्यवायुशब्दार्थोनातिवाहिकः ॥ तथात्वे
मुख्यस्यप्राप्यत्वाभावप्रसंगादितिपूर्ववैषम्येणापिशंकनात्संगतिश्च ॥ सिद्धांतस्तु ॥
पूर्वप्राप्यत्वविद्युच्छब्दितवाणीपतित्वरूपलिंगाभ्यां पूर्वआतिवाहकश्चरमोमुख्यइति
निर्णयसंभवात् ॥ मुख्यार्थस्यापिपूर्वप्राप्यत्वलिंगेनउत्क्रांतस्तुशरीरात्स्वादित्यादि

भाष्योक्तवचनेनच त्यागसंभवात्पूर्वप्राप्यआतिवाहकएवेति ॥ फलंतु इयदामननादि
त्यत्रोक्तप्राणाधिकार्युत्तमत्वस्यायोगस्तत्समाधिश्चेति ॥ ४ ॥ ॐ वैद्युतेनैवततस्त
च्छ्रुतेः ॐ ॥ पूर्ववैषम्येणशंकनात्संगतिः ॥ प्रकृतब्रह्मप्राप्तिमार्गेमुख्ययोरनंतरंब्रह्म
णोवाक्प्राप्योस्तिनवेतिचिंता ॥ तदर्थं मुख्यब्रह्मणोरंतरालेप्राप्यांगीकारेबाधकंना
स्त्युतास्तीति ॥ पूर्वत्रदिवस्पतित्वबाधकेनचरमवायोरातिवाहिकत्वायोगेपि इहमु
ख्यब्रह्मांतरालेकस्यचित्प्राप्यस्यांगीकारे बाधकाभावान्मुख्यवायुःस्वस्मादनंतरमपि
ब्रह्मेतरप्राप्यांतरयुक्तोधिकारित्वात्प्राचीनाधिकारिवदित्यनुमानाच्च ॥ नचेयदामन
नादित्यत्रोक्ताधिकार्युत्तमत्वमेवबाधकं ॥ तद्बाधितंचानुमानमितिशंक्यं ॥ सोमंवै
श्वानरंचंद्रंध्रुवमिति पूर्वत्रभाष्योक्तस्मृताविंद्रादवरस्यध्रुवस्येंद्रादनंतरंप्राप्त्युक्त्यो तम

त्वक्रमानुरोधेन प्राप्तिक्रमाभावाद्वायोरनंतरमपितदन्यः कश्चित्प्राप्योस्त्विातिप्राप्तोसिद्धां
तः ॥ अधिकार्युत्तमत्वस्यप्राप्यांतराभ्युपगमाबाधकत्वेपितत्पुरुषोमानवः सएनान्ब्र
ह्मगमयतिविद्युत्पतिर्वायुरेवनयेद्ब्रह्मनचापरइत्यादिश्रुतिस्मृत्यवगमात् ॥ ब्रह्मप्रापक
त्वंवायोःश्रुतमातरालेप्राप्यांतरकल्पनं बाधतइतिसएवांतिमप्राप्यः अन्यस्यांतिम
प्राप्यत्वेतस्यैव ब्रह्मप्रापकत्वापत्तेः ॥ राजादौतथादर्शनादिति ॥ फलंतुवायोरतिश
येन प्राधान्यायोगस्तत्समाधिश्चेति ॥ ५ ॥ ॐ कार्यंबादरिरस्यगत्युपपत्तेः ॐ ॥
ब्रह्मप्राप्तिमार्गेचरमप्राप्तिनिरूपणाद्वासएनान्ब्रह्मेति पूर्वत्रोदाहृतश्रुतिगतब्रह्मपदार्थ
निरूपणाद्वापूर्वसंगतिः ॥ अत्रसएनान्ब्रह्मेतिश्रुतंब्रह्मकिंचतुर्मुखएवाथब्रह्मैवोतोभयम
४ पीतिर्चिंता ॥ तदर्थमुभयमितिपक्षे एकैकपक्षोक्तसाधकबाधकेसमीकर्तुंनशक्यतेतार्कि

 

वाशंक्यतइति ॥ तथोभयप्राप्तिपक्षेयुगपदुभयप्राप्तेरयोगादिति ॥ पूर्वपक्षस्तु ॥ चतु
र्मुखएवेदंश्रुत्युक्तंब्रह्मयदिहवावपरमाभिपश्यातिप्राप्नोतिब्रह्माणंचतुर्मुखमितिश्रुत्या—
ब्रह्मणासहतेसर्वेसंप्राप्तेप्रतिसंचरे ॥ परस्यांतेपरात्मानः प्रविशंतिपरंपदमितिस्मृत्या
तथापिप्रकृतेर्बंधोब्रह्मणासहभिद्यतइत्यादिना चतुर्मुखमुक्तिपर्यंतंबंधस्यसंततत्वेन त
तोर्वाक्चतुर्मुखस्यैवप्राप्तेर्युक्तत्वादित्युपपत्त्याचतुर्मुखप्राप्तेरेवावगमेनाबाधकेनमुख्यार्थ
स्यापिब्रह्मणस्त्यागेन मुख्यार्थविरिंचग्रहणोपपत्तेः ॥ नचब्रह्मविदाप्नोतिपरमिति
परब्रह्मप्राप्तिश्रुतिविरोधः ॥ तस्यसामान्यवाक्यस्यप्रागुक्तविशेषश्रुत्यादिना चतुर्मुख
प्राप्त्यनंतरमाचिरेणप्रलयकालेतेनसहपरमाप्नोतीतिसामीप्यार्थतयासावकाशत्वसंभ— 
वादविरोधःसएनान्ब्रह्मत्यत्रब्रह्मपदार्थः परब्रह्मैवब्रह्मशब्दस्यतत्रमुख्यत्वात् ॥ तस्यै

वश्रवणादिसाधनैरेवपरोक्षीकृतत्वाच्चतुर्मुखेच श्रवणादिसाधनार्जितप्रतिपत्तेः ॥ चतु
र्मुखंप्राप्नुवानीतीच्छायाश्चाभावादितिद्वितीयः ॥ उभयस्वीकारपक्षस्यचोक्तहेतुनास
मीकरणायोगाद्युगपत्प्राप्त्ययोगश्चेतिमानाभावेनायोगादिति ॥ सिद्धांतस्तु ॥ चतु
र्मुखपरब्रह्मैवेत्यव्यावृत्त्या तत्तन्मात्रार्थकत्वेविशेषहेत्वाभावेनोक्तहेतुना तत्तदर्थग्रहण
मात्रस्यैवोपपादकत्वादुभयमपि ब्रह्मशब्दार्थत्वेनात्रप्राप्तिश्रुतौविवक्षितं ॥ यत्तुचतुर्मु
खग्रहणेप्रतिपत्त्यभिसंध्यभावरूपंबाधकमुक्तं ॥ यच्चपरब्रह्मग्रहणेनगत्युपपत्तिरित्यत्रबं
धस्य संततत्वरूपंबाधकमुक्तं ॥ तत्राद्यमप्रतीकालंबनानांपरप्राप्त्यंगीकारेणतेषांप्र
तिपत्त्यादेरभावान्नबाधकं ॥ द्वीतीयंअप्रतीकाश्रयायेहितेयांतिपरमेवतिवितिप्रमाण
बलेन मुक्तस्थानगतपरब्रह्मप्राप्त्यंगीकारेणचोपपन्नं ॥ चतुर्मुखप्राप्तिमतांचप्रतीकालं

बनानांअस्त्येवकार्येप्रतिपत्यादीतितेषामापितस्यबाधकमित्याधिकारिभेदेनपक्षद्वयोक्त | मु.अ.
हेतुनाउभयार्थत्वांगीकारे समीकर्तुंशक्यत्वात् ॥ अप्रतीकाश्रयायेहितेयांतिपर | ४।३
मेवतु ॥ स्वदेहेब्रह्मदृष्ट्यैवगच्छेद्ब्रह्मसलोकतामित्युक्तेर्योग्यताक्रमेणैवप्रलयेपूर्वंच
तयोः प्राप्तिरिति ॥ फलंतुगम्यानिर्णयनिर्णयाभ्यांगत्यनुस्मृतितत्समाधी ॥ ६ ॥
इतिश्रीमद्राघवेंद्रयतिकृतायां न्यायमुक्तावल्यां चतुर्थाध्यायस्य तृतीयःपादः ॥

श्रीमध्वपतयेनमः ॥ हरिः ॐ ॥ कर्मक्षयादिचतुर्विधफलेत्रिविधमुक्तात्रावसरप्राप्तो
भोगउच्यते ॥ ॐ संपद्याविहायस्वेनशब्दात् ॐ ॥ परंजैमिनिरित्यत्रब्रह्मप्राप्तिमत्वेन
प्रकृतोमुक्तःकिंब्रह्मातिक्रम्यभोगान्भुङ्क्तेथातिक्रम्योतिचिंता ॥ तदर्थमेतंसेतुंतीर्त्वांध- | १००

सन्ननंधोभवतीतिश्रुतिरतिक्रमपरेतानतिक्रमपरेति अनातिक्रमार्थकत्वेकल्पकंनास्त्यु
तास्तीति ॥ पूर्वपक्षस्तु ॥ एतंसेतुमितिश्रुतेरन्यार्थपरत्वे कल्पकाभावात्सेतुपदोक्तब्रह्म
तीत्वातिक्रम्येति ब्रह्मातिक्रमानंतरमेवस्वरूपाविर्भावरूपमुक्त्युक्त्या ब्रह्मप्राप्तस्यामुक्त
त्वावगमान्मुक्तस्यैवभोगभोक्तृत्वाद्ब्रह्मातिक्रम्यमुक्तः सन्भोगान्भुंङ्क्तइति ॥ सिद्धां
तस्तु ॥ परंज्योतिरुपसंपद्येतिश्रुतौ ब्रह्मप्राप्तस्यैवस्वरूपाविर्भावरूपमुक्तत्वस्योक्तेरिमां
घोरामशिवांनदींतीर्त्वैतंसेतुमाप्येतिस्पष्टश्रुत्यनुरोधेन एतंसेतुंगंतुमन्यत्तीर्त्वेत्येवत-
स्याःश्रुतेरर्थस्यवाच्यत्वादात्मानमभिसंपद्यैतेनात्मनांयथाकामंसर्वान्कामाननुभवती
तिश्रुतेश्चज्ञानीब्रह्मप्राप्यतदविहायैवभोगान्भुङ्क्तेइति ॥ फलंतुब्रह्मणश्चरमप्राप्यत्वा
क्षेपसमाधी ॥ १ ॥ ॐ मुक्तःप्रतिज्ञानात् ॐ ॥ पूर्वाक्षेपेणात्रशंकनात्संगतिः ॥

परंज्योतिरुपसंपद्यस्वेनरूपेणाभिनिष्पद्यते ॥ सतत्रपर्येतीतिपूर्वसूत्रोपात्तेश्रुति
शेषेसइत्युक्तेः किममुक्तउतमुक्तइतिचिंता ॥ तदर्थंसइतितच्छब्दःकिमव्यव
हितपूर्वपरामर्शकोथप्राकरणिकपरामर्शकइति तदर्थमव्यवहितपरामर्शेपर्येतीत्यादि
नोक्तक्रियावत्वं बाधकमुतनेति ॥ पूर्वपक्षस्तु ॥ पूर्वत्रपरंज्योतिसंपन्नस्यावि
र्भूतस्वरूपस्यमुक्तस्यैव सतत्रपर्येतीतिवाक्यस्येशानतिक्रमेण भोगेमानत्वमभिप्रे
त्यसूत्रेस्वेनेतिश्रुत्युक्तिरयुक्ता ॥ स्वेनेतिपूर्ववाक्येनिर्गुणोपासकस्य स्वरूपाविर्भावो
क्तेः ॥ सतत्रेत्यत्रपुनर्दहरविद्योपासकस्य मुक्तस्यैवेहपरामर्शात् ॥ नचप्रकरणभेद
कल्पकाभावः ॥ पर्यटनादिवाक्यशेषोक्तक्रियावत्वस्यैवकल्पकत्वात् ॥ नहिक्रिया १०१
वत्वंकृतकृत्यस्यमुक्तस्योपपद्यते ॥ अमुक्तस्यत्वन्यदेतादृशभोगायोगेपि ब्रह्मप्राप्तस्य

तादृशभोगसंभवात् ॥ नचद्वितीयेविहारोपदेशादित्यत्रमुक्तस्यसतत्रपर्येतीतिवि
विहारोक्तेर्नकर्तृत्वंकाल्पनिकमित्युक्तेस्तद्विरुद्धइतिशंक्यं तस्यापीहाक्षेपादिति ॥
सिद्धांतस्तु ॥ अहरहरेनमितिभाष्योक्तश्रुतौ ब्रह्मप्राप्तानांसुप्तानाममुक्ततयादिव्यभो
गाभावमुक्त्वामुक्तस्यैवतत्प्राप्यातादृशभोगोक्तेः ॥ क्रियावत्वस्यकृत्रिमत्वस्यमुक्तेपि
सिद्धत्वेन तस्यप्राग्युक्तपरामर्शकत्वेपिबाधकाभावात्सइतितच्छब्दार्थोमुक्तएवेति ॥
फलंतुमुक्तस्यभोगाक्षेपसमाधिश्चेति ॥ २ ॥ ॐ आत्माप्रकरणात् ॐ ॥ पूर्वत्रस्वेने
तिश्रुतिशेषस्थतच्छब्दार्थउक्तोत्रपूर्ववाक्यस्य ज्योतिःशब्दार्थउच्यतइतिसंगतिः ॥
परंज्योतिरित्युक्तंज्योतिःशब्दार्थःकिमादित्योथब्रह्मेतिचिंता ॥ तदर्थं सतेजसिसूर्येसं
पन्नइतिसमाख्याबलवत्युतप्रकरणमिति ॥ तदर्थं समाख्यानिरवकाशाउतसावकाशे

०२ ति ॥ ज्योतिःशब्दस्यसूर्यमगनमज्योतिरित्यादावादित्यइवज्योतिश्चरणेत्यादौउक्त मु.अ. ४।४
दिशा भगवतिप्रयोगेपिसतेजसिसूर्येसंपन्नइतिसमाख्ययाएकार्थ्यलाभात् ॥ ज्यो
तिरत्रादित्यएवनाविष्णुःप्रकरणस्यचवैष्णवत्वेपि प्रसंगादन्योक्तिसंभवात् निरवकाश
समाख्ययाबाधाद्वेतिप्राप्तेसिद्धांतः ॥ यआत्मापहतपप्मेत्यादिना ब्रह्मसाधारणश्रुति
लिंगाभ्यांब्रह्मोपक्रम्यपरंज्योतिरित्यधीनत्वेनास्यवाक्यस्यब्रह्मप्रकरणस्थत्वात् ॥ प्रक
रणस्यचसमाख्यातोबलवत्वात् ॥ समाख्यायाश्चप्रारब्धकर्ममोक्षपरत्वेन ब्रह्मप्राप्तिमा
र्गेअंतरादित्यप्राप्तिपरत्वेनचोपपत्त्या सावकाशत्वात् ॥ परंज्योतिःपरंब्रह्मेतिस्मृत्या
परंज्योतिःशब्दस्यपरमात्मन्येवमुख्यत्वाच्चब्रह्मैवपरंज्योतिःशब्दार्थइति ॥ फलंतुमु १०२
क्तस्य ब्रह्मसमीपएवभोगइतिप्रागुक्तस्याक्षेपसमाधिश्चेति ॥ ३ ॥ ॐ अविभाग

नदृष्टत्वात् ॐ ॥ एवंत्रिभिर्नयैर्मुक्तोब्रह्मप्राप्यभोगान्भुङ्क्तइतिसिद्धेसति सभोगः
किंरूपइतिविशेषचिंतनात्संगतिः ॥ मुक्तेषुसायुज्यभाजांमुख्यत्वात्तेषांभोगोत्रचिं
त्यते ॥ सायुज्यभाजांभोगः किंभगवद्भुक्तस्याथभगवद्भुक्तशेषस्येतिचिंता ॥ तदर्थं भु
क्तशेषभोगेमुक्तेः परमपुमर्थत्वंहीयतउतनेति ॥ पूर्वपक्षस्तु ॥ मुक्तेःपरमपुमर्थत्वेन
भगवदभुक्तस्यापिभोग्यस्यसौलभ्याद्भगवदभुक्तानेवभुङ्क्ते ॥ भगवद्भुक्तशेषनियमे
चकेषांचित्संजातभोगेछानांभोगाभावप्रसंगेन मुक्तेःपुमर्थत्वहानिः ॥ ईश्वरस्यनित्य
पूर्णानंदत्वेन कदाचिदभोगस्यापिसंभवादिति ॥ सिद्धांतस्तु ॥ मुक्तेःपुमर्थत्वेन भ
गवदभुक्तभोगानां सुलभत्वेपियानेवाहंभृणोमीतिश्रुतौ भगवताभुज्यमानभोगभो
क्तृत्वश्रवणान्मुक्तानां भगवद्भुज्यमानभोग्यभोक्तृत्वयैवोपेयं ॥ नचैवं ॥ भगवद्भुक्ता

शेषभोक्तृत्वस्ययानेवेतिश्रुतौ प्रतीतेर्भगवत्साम्यापत्तिःशंक्या ॥ मुक्ताःप्राप्यपरंवि
ष्णुमितिर्विशेषस्मृत्यातानेवेतिसामान्यतः संकोचत्वात् ॥ नचोक्तरीत्याकदाचिद्भो
गाभावप्रसक्त्यामुक्तेरपुमर्थत्वंशंक्यं पूर्णानंःपूर्णभुक्पूर्णकर्तेतिश्रुतौपूर्णानंदत्वेपि
पूर्णभोगश्रवणेन तस्याभोगाप्रसक्तेरिति ॥ फलंतुअत्तेत्यादावुक्तस्यहरेःसर्वभोक्तृत्व
स्याक्षेपस्तत्समाधिश्च ॥ ४ ॥ ॐ ब्राह्मेणजैमिनिरुपन्यासादिभ्यः ॐ ॥ पूर्वाक्षेपे
णशंकनात्संगतिः ॥प्रकृतोभोगःकिमुक्तानांनयुक्तउतयुक्तइतिर्चिंता ॥ तदर्थे तेषां
भोगहेतुशरीरंनास्त्युतास्तीति ॥ तथाभौतिकदेहाभावेपिदेहांतरेण नयुक्तउतयुक्तइ
ति ॥ पूर्वत्रोक्तोमुक्तानां ब्रह्मानतिक्रमेणभोगोवाभगवद्भुक्तभोगोवानयुक्त ॥ तेषांसं
सारपारंगतत्वेन भोगहेतुदेहाभावात् ॥ तत्सत्वेमुक्तत्वव्याघातात् ॥ ब्राह्मदेहादिना

भोगस्तुनयुक्तः ॥ प्रलयादौतद्भावेपिभोगाभावादितिप्राप्तेसिद्धांतः ॥ भौतिकादिस
र्वस्वदेहाभावेपिसवाएषब्रह्मनिष्ठइति आदत्तेहरिहस्तेनेतिभाष्योक्तश्रुतिस्मृतिभ्यां-
परमात्मानंप्रविष्टस्यतद्देहेनैव देहीवद्भोगावगमात् ॥ गच्छामिविष्णुपादाभ्यामि-
तिस्मृत्युक्त्या विष्णवयवैरेवगमनादिकरोमीतिपूर्वस्मरणबलेन मुक्तौतद्देहप्राप्तिमत्व
युक्त्याचब्राह्मदेहेन वासएतस्मान्मर्त्याद्विमुक्तश्चिन्मात्रीभवतीत्यादिश्रुत्या मर्त्यदेहं
परित्यज्येत्यादिस्मृत्या भगवदनुगृहीतैःस्वरूपभूतचिन्मात्रदेहावयवैर्वामुक्ताः भो
गान्भुंजंतेकर्माणिचकुर्वंतिचेति ॥ फलंतुमुक्तेःपुमर्थत्वाक्षेपसमाधी ॥ ५ ॥ ॐ सं
कल्पादेवचतछ्रुतेः ॐ ॥ पूर्वत्रभोगेऽलौकिकोपकरणानुपेक्षोक्ता ॥ अत्रतुलौकिक

10
०४

साधनापेक्षानेत्युच्यतइतिसंगतिः ॥ प्रकृतमुक्तभोगःकिंतत्तदुपायसाध्यसाधनसाध्यः
उतसंकल्पमात्रसाध्यइतिचिंता ॥ तदर्थं भगवदोकस्थत्व युक्तिर्लोकानुसारसहाया
सतीसाधनसाध्यत्वसाधिकाभवत्युतनेतिचिंता ॥ भगवदोकस्थोमुक्तभोगस्तत्तदुपा
यसाध्यसाधनसाध्यःओकस्थत्वात् ॥ भूम्याद्योकस्थभोगवदितियुक्त्या लोकेभोग
स्यतत्तदुपायसाध्यसाधनसाध्यत्वदृष्ट्यालोकानुसाराच्च मुक्तभोगोपितादृशएवेतिप्रा
प्तेसिद्धांतः ॥ सयदिपितृलोककामोभवतिसंकल्पादेवास्यपितरःसमुत्तिष्ठंतीतिश्रुतेः ॥
संकल्पमात्रसाध्योमुक्तभोगोन तत्तदुपायसाध्यसाधनसाध्यः ॥ प्रागुक्तयुक्तिस्तुश्रुति
बाधितासतीनसाधिका ॥ लोकविरोधस्तुनिर्दोषभगवदोकसिगुणएवेति ॥ फलंसं
सारसमानधर्मतापयात् मुक्तेःपुमर्थत्वाक्षेपस्तत्समाधिश्चेति ॥ ६ ॥ ॐ अतएवचान

मु.अ.
४।४

१०४

न्याधिपतिः ॐ ॥ अत्रप्रागुक्तहेत्वतिदेशादनंतरसंगतिः ॥ प्रकृतोमुक्तःकिंक्लृप्तपति
भ्योन्यपतिनियतोथक्लृप्तपतिनियतएवेतिचिंता ॥ तदर्थं मुक्तावनपेक्षितमपिभव
त्युतनेति ॥ लोकेराजगृहप्रविष्टस्यानपेक्षितस्वावरप्रतिहारादिनियतत्वमिवमुक्तस्या
पिपरगृहगतत्वात्स्वावरनियतत्वंस्यादन्यविरोधादितिप्राप्तेसिद्धांतः ॥ लोकेसत्यसंक
ल्पत्वाभावेनानपेक्षितस्वावरनियतत्वसंभवेपि मुक्तस्यसत्यसंकल्पत्वादेवनानपेक्षित
प्राप्तिर्युक्तेतिक्लृप्तपतिनियताएवमुक्ताः नहिमुक्तानामवरनियतत्वमनपेक्षितं ॥ तथा
चस्मृतिःपरमोधिपतिस्तेषामित्यादिकेति ॥ फलंतुमुक्तःसंसारसमानधर्मत्वतदभावौ
॥ ७ ॥ ॐ अभावंबादरिराहह्येवं ॐ ॥ संकल्पादेवेत्यत्रोक्तसंकल्पमात्राधीनभोगा
३५ क्षेपेणात्रशंकनात्संगतिः ॥ अतएवेत्यस्यप्रागुक्तहेत्वतिदेशकतयाप्रासंगिकत्वेनाव्य

वधायकत्वात्प्रकृतोमुक्तानांभोगोनयुज्यते उतयुज्यतइतिचिंता ॥ तदर्थं देहभावा भावयोः भोगउपपादयितुमशक्यउतशक्यइति ॥ तथामुक्तानां देहाभावाभावौ विरोधादयुक्तावुतयुक्ताविति ॥ पूर्वपक्षस्तु ॥ मुक्तानांदेहस्यभावेदुःखादिप्रसंगेन निर्दुःखभोगोनुपपादनः ॥ अभावेचभोगासंभवः ॥ नचब्राह्मणेत्यत्रोक्तदिशा ब्राह्म देहेनभोगोयुक्तइतिवाच्यं ॥ सायुज्यभाजांतत्संभवेप्यन्येषांतदभावात् ॥ नचाचि च्छरीरेणतेषांभोगोपपत्तिः ॥ सुप्त्यादौसतोपितस्यभोगायतनत्वादर्शनात् ॥ अतो देहभावेनाभावेनवाभोगस्यदुरुपपादनत्वान्नयुज्यतेभोगः ॥ विरोधादयुक्तौच देहभा वाभावपक्षाविति ॥ सिद्धांतस्तु ॥ युज्यतेमुक्तानांभोगः ॥ पक्षद्वयेपिभोगस्यसूप पादनत्वात् ॥ बाह्यदेहभावेतस्यजडत्वेपि शुद्धसत्वात्मकतेजोरूपतयादुःखाद्यनापा



दकत्वेनतत्रसुखानुभवमात्रस्योपपत्तेः ॥ प्रदीपोयथा तैलाद्येवंभुंक्तेनतुतद्वतकार्ष्ण्या दितद्वत्तीर्णोहितदासर्वांच्छोकानितिश्रुतेः ॥ देहाभावपक्षेपियथास्वप्नावस्थायां बाह्यदेहाभिमानाभावेपिभोगस्तथामुक्तौ बाह्यदेहाभावेपिचिच्छरीरेणभोगोपपत्तेः ॥ अनभिमानस्याभावसाम्यात् ॥ सुप्तौमनसउपरतत्वादभोगः देहभावाभावपक्षौचाचि तावचितावेति ॥ अशरीरोवातदाभवतीतिचश्रुतिसिद्धत्वात् ॥ द्वादशाहस्ययज मानेच्छयाएकानेककर्तृकत्वाभ्यामहीनत्वसत्रत्ववन्मुक्तानां स्वेच्छयातेजोरूपबाह्यदे हभावाभावयोरविरोधाच्चयुक्ताविति ॥ तथाचस्मृतिः ॥ स्वेच्छयावाशरीराणितेजो रूपाणिकानिचित् ॥ स्वीकृत्यजागरितवद्भुक्त्वात्यागः कदाचनेति ॥ फलंतुनिर्दुःख भोगाभावान्मुक्तेः पुमर्थत्वाक्षेपस्तत्समाधिश्चेति ॥ ८ ॥ ॐ जगद्व्यापारवर्जम् ॐ ॥

एवमनुपपत्तिनिरासेनमुक्तानां भोगेसिद्धेत्रतस्यमर्यादोच्यतइतिसंगतिः ॥ मुक्ताः
किंजगत्सृष्ट्यादिव्यापारान्कुर्वंतिनवेतिचिंता ॥ तदर्थं सर्वान्कामानाप्नोतीतिश्रुतौ
सर्वशब्दोसंकुचितवृत्तिरुतसंकुचितवृत्तिरिति ॥ तदर्थं तत्संकोचकंनास्त्युतास्तीति ॥
तदर्थं सर्वेस्मैदेवाबलिमावहंतीति सर्वदेवपूज्यत्वश्रुतिः सर्वजीवविषयाविरिंचविष
यावेति ॥ सर्वेस्मैदेवाइतिश्रुतेर्जीवमात्रविषयत्वात्सर्वान्कामानितिश्रुतेः शरीरभेदा
दुत्क्रम्येत्यादिजीवप्रकरणगतत्वेपिजीवानां तादृशशक्तिकल्पनेनवाशक्त्यभावेपि-
सत्यकामत्वादेवसर्वैश्वर्यसंभवेन सर्ववाक्यसंकोचकाभावात्कुर्वंत्येवमुक्ताः जगत्सृष्ट्या
दिव्यापारमितिप्राप्तेसिद्धांतः ॥ महाचमस्यइत्युपक्रमेण सर्वेस्माइतिश्रुतेः ॥ विरिं
चविषयतयासर्वमुक्तविषयत्वाभावेन जीवानांसृष्ट्यादौशक्तिकल्पनाभावेन तत्रसा

मर्थ्याभावात्सत्यकामत्वस्यस्वाधिकानंदसंप्राप्तौसृष्ट्यादिव्यापृतिष्वपि ॥ मुक्तानांनै
वकामोस्तीतिस्मृत्या सृष्ट्याद्यन्यकामनावत्वेनोपपत्तेः ॥ जगव्द्यापारवर्जमन्यान्का
मान्भुङ्क्तेमुक्ताइति ॥ अत्रमुक्तविरिंचस्याशेषमुक्तनियमव्यापारोन्यदेवानां स्वाव
रमुक्तनियमनव्यापारश्चास्तीतिध्येयं ॥ फलंतुलक्षणसूत्राक्षेपसमाधी ॥ १ ॥ ॐ
स्थितिमाहदर्शयतश्चैवंप्रत्यक्षानुमाने ॐ ॥ पूर्वत्रकामपदोक्तविषयभोगेयत्तोक्तात्रतु
तदाभिव्यंग्यस्वरूपसुखस्ययथास्थितिरूपेयत्तोच्यतइतिसंगतिः ॥ मुक्तःकिमानंद
वृद्धिन्हासवानुउतयथास्थितिमानितिचिंता ॥ तदर्थंतेषामुपासनादिकंकिंवृध्या
दिहेतुर्भवत्युतनेति ॥ पूर्वपक्षस्तु ॥ एतत्सामगायन्नास्तइत्यादौ मुक्तानामुपास
नाश्रवणात्तस्यचवैयर्थ्यान्यथानुपपत्त्या फलत्वावश्यंभावान्मुक्तानांवशित्वरूपैश्वर्य-

बलेन कामिताशेषपूर्याभोगविशेषसत्वाच्च वृद्धिमानानंदस्तदुपरमेच ऱ्हासवांनिति ॥ सिद्धांतस्तु ॥ एकप्रकारेणैवस्थितिमान्मुक्तानंदः ॥ सएषइतिभाष्योक्तश्रुतौ वृध्याद्यभावमुत्क्वादर्शन्नेवात्मानमित्युपासनावचोप्यापत्तिविपातिशब्दितवृद्धिऱ्हासनिषेधान्महतांप्रत्यक्षेण मुक्तोनवृध्यादिमान् ॥ कारणशून्यत्वादित्यनुमानेनचवृध्याद्यभावस्यसिद्धत्वात् ॥ उपासनायाश्चहरेरुपासनाचात्रसदैवसुखरूपिणीतिस्मृत्या स्वयंफलरूपत्वेनफलांतरसाधनत्वाभावात् ॥ वशित्वेनकामिताशेषभोगप्राप्तावप्ययोग्येकामनाविरहाद्योग्यस्यच प्राप्तत्वाद्भोगविशेषोपितदुपरमादपि नसुखवृद्धिऱ्हासहेतुतयापिसभोगविशेषः ॥ अवृद्धिऱ्हासरूपत्वंमुक्तानांप्रायिकंभवेत ॥ कादाचित्कविशेषस्तुनैवतेषांनिषिध्यतइत्युक्तदिशा स्वरूपसुखस्यवैचित्र्यहेतुतयावोपपन्नइति ॥ फलं १०७

तुसंसारसमानधर्मतापत्त्या मुक्तेरपुमर्थत्वाक्षेपसमाधी ॥ १० ॥ ॐ अनावृत्तिःश
ब्दादनावृत्तिःशब्दात् ॐ ॥ पूर्वत्रमुक्तानंदस्यवृत्ध्यादिनेत्युक्तं ॥ अत्रतुतदनुभ
वस्यांतोनास्तीत्युच्यतइतिसंगतिः ॥ प्रकृतोमुक्तःकिंजन्ममृत्यादिप्राप्तिरूपपुनरावृ
त्तिमानुतनेतिचिंता ॥ तदर्थं मुक्तस्यसमस्तकालावसायित्वंपुनरावृत्तावबाधकमुतबा
धकमिति ॥ तदर्थं समस्तस्यापिकालस्यसमाप्तिरस्त्युतनेति ॥ पूर्वपक्षस्तु ॥ सर्गा
दिस्थस्येवमुक्तस्याप्यस्तिपुनरावृत्तिः ॥ मुक्तस्यसमस्तकालवासित्वेपि समस्तस्यापि
कालस्यकदाचित्समाप्तिसंभवात् ॥ नचकालस्यानंत्यात्समाप्तेरसंभवः ॥ भारतयुद्धे
चतुर्दशींपंचदशींभूतपूर्वांतुषोडशीं ॥ इमांतुनाभिजानामिअमावास्यांत्रयोदशीमि
तित्रयोदश्याः असंभावितपंचदशीत्वदर्शनादिति ॥ सिद्धांतस्तु ॥ कालस्यसमस्त

स्यापिसमाप्तेर्व्याहतत्वेनानंतकालावसायित्वात् ॥ सर्गिणोमन्वंतराद्यवसायितया 
पुनरावृत्तावपिनमुक्तस्यनपुनरावृत्तिः ॥ नचपुनरावर्ततेइतिश्रुतेश्चसर्वान्कामानाप्नो 
तिइतिश्रुतौसर्वकामाप्तेः श्रवणेनश्रुतावपुनरावृत्तेःकामितत्वाच्च नपुनरावृत्तिरितिनि
त्यानिर्दुःखानंदानुभवंतएवमुक्ताइति ॥ फलंतुमुक्तेःपुमर्थत्वाक्षेपसमाधी ॥ ११ ॥
कल्याणगुणपूर्णायदोषदूरायविष्णवे ॥ नमःश्रीप्राणनाथायभक्ताभीष्टप्रदायिने ॥
इतिश्रीमत्परमहंसपरिव्राजकाचार्य श्रीमत्सुधींद्रगुरुपादशिष्यराघवेंद्रयतिकृतायां—
न्यायमुक्तावल्यां चतुर्थाध्यायस्यचतुर्थःपादः ॥ चतुर्थाध्यायःसमाप्तः समाप्तोयंग्रंथः
श्रीहनुमद्भीममध्वांतर्गत श्रीरामकृष्णवेदव्यासात्मक श्रीलक्ष्मीनरसिंहः प्रीयतां 
श्रीकृष्णार्पणमस्तु ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

श्रीपूर्णबोधगुरुतीर्थपयोधिपाराकामारिमाक्षविषमाक्षिशिरःस्पृशंती ॥ पूर्वोत्तरामित तरंगचरत्सुहंसादे-
वालिसेवितपरांघ्रिपयोजलग्ना ॥ १ ॥ जीवेशभेदगुणपूर्त्तिजगत्सुसत्वनीचोच्चभावमुखनक्र गणैः समेता ॥
दुर्वाद्यजापतिगिलैर्गुरुराघवेंद्रवाग्देवतासरिदमुंविमलीकरोतु ॥ २ ॥ श्रीराघवेंद्रस्सकलप्रदातास्वपादकंज
द्वयभक्तिमद्भ्यः अघाद्रिसंभेदनदृष्टिवज्रःक्षमासुरेंद्रोवतुमांसदायम् ॥ ३ ॥ श्रीराघवेंद्रोहरिपादकंजनिषे-
वणाल्लब्धसमस्तसंपत् देवस्वभावोदिविजद्रुमोयमिष्टप्रदोमेसततंसभूयात् ॥ ४ ॥ भव्यस्वरूपोभवदुःख
तूलसंघाग्निचर्यःसुखधैर्यशाली समस्तदुष्टग्रहनिग्रहेशोदुरत्ययोपप्लवसिंधुसेतुः ॥ ५ ॥ निरस्तदोषो-
निरवद्यवेष प्रत्यर्थिमूकत्वनिदानभाषः विद्वत्परिज्ञेयमहाविशेषोवाग्वैखरीनिर्जितभव्यशेषः ॥ ६ ॥ सं
तानसंपत् परिशुद्धभक्ति विज्ञानवाग्देहसुपाटवादीन् दत्वाशरीरोत्थसमस्तदोषान्हत्वासनोव्याद्गुरुराघवेंद्रः
॥ ७ ॥ यत्पादोदकसंचयस्सुरनदीमुख्यापगासादितासंख्यानुत्तमपुण्यसंघविलसत्प्रख्यातपुण्यावहः
दुस्तापत्रयनाशनो भुविमहावंध्यासुपुत्रप्रदोव्यंगस्वंगसमृद्धिदोग्रहमहापापापहस्तंश्रये ॥ ८ ॥ यत्पाद
कंजारजसापरिभूषितांगायत्पादपद्ममधुपायितमानसाये यत्पादपद्मपरिकीर्तनजीर्णवाचस्तद्दर्शनंदुरितकान
नदावभूतं ॥ ९ ॥ सर्वतंत्रस्वतंत्रोसौश्रीमध्वमतवर्द्धनः विजयींद्रकराब्जोत्थसुधींद्रवरपुत्रकः ॥ १० ॥

श्रीराघवेंद्रोयतिराड्गुरुर्मेस्याद्भयापहः ज्ञानभक्तिसुपुत्रायुर्यशः श्रीपुण्यवर्धनः ॥ ११ ॥ प्रतिवादि
जयस्वांतभेदाचिन्हादरोगुरुः सर्वविद्याप्रवीणोन्योराघवेंद्रान्नविद्यते ॥ १२ ॥ अपरोक्षीकृतश्रीशः समुपे
क्षितभावजः अपेक्षितप्रदातान्योराघवेंद्रान्नविद्यते ॥ १३ ॥ दयादाक्षिण्यवैराग्य वाक्पाटवमुखांकितः
शापानुग्रहशक्तोन्योराघवेंद्रान्नविद्यते ॥ १४ ॥ अज्ञानविस्मृतिभ्रांतिसंशयापस्मृतिक्षयाः तंद्रीकंपवचः
कौंठ्यमुखायेचेंद्रियोद्भवाः ॥ १५ ॥ दोषास्तेनाशमायांतिराघवेंद्रप्रसादतः ॐ श्रीराघवेंद्रायनमः इत्य
ष्टाक्षरमंत्रतः जपिताद्भावितान्नित्यामिष्टार्थाः स्युर्नसंशयः ॥ १६ ॥ हन्तुनः कायजान्दोषानात्मात्मीयस
मुद्भवान् सर्वानपिपुमर्थांश्चददातुगुरुरात्मवित् ॥ १७ ॥ इतिकालत्रयेनित्यंप्रार्थनांयः करोतिसः इहामु
त्राप्तसर्वेष्टोमोदतेनात्रसंशयः ॥ १८ ॥ अगम्यमहिमालोकेराघवेंद्रोमहायशाः श्रीमध्वमतदुग्धाब्धिचंद्रोव
तुसदानघः ॥ १९ ॥ सर्वयात्राफलावाप्त्यैयथाशक्तिप्रदक्षिणं करोमितवसिद्धस्यवृंदावनगतंजलं शिर
साधारयाम्यद्यसर्वतीर्थफलाप्तये ॥ २० ॥ सर्वाभीष्टार्थसिद्ध्यर्थंनमस्कारंकरोम्यहं तवसंकीर्तनंवेदशास्त्रा
र्थज्ञानसिद्धये ॥ २१ ॥ संसारेक्षयसागरे प्रकृतितोगाधेसदादुस्तरेसर्वावद्यजलेग्रहैरनुपमैः कामादिभंगाकु
ले नानाविभ्रमदुर्भ्रमेमितभयस्तोमादिफेनोत्कटे दुःखोत्कृष्टविषेसमुद्धरगुरोमांमग्नरूपंसदा ॥ २२ ॥ राघवें
द्रगुरुस्तोत्रंयः पठेद्भक्तिपूर्वकम् तस्यकुष्ठादिरोगाणांनिवृत्तिस्त्वरयाभवेत् ॥ २३ ॥ अंधोपिदिव्यदृष्टिः
स्यादेडमूकोपिवाक्पतिः पूर्णायुः पूर्णसंपत्तिः स्तोत्रस्यास्यजपाद्भवेत् ॥ २४ ॥ यःपिबेज्जलमेतेनस्तोत्रे
णैवाभिमंत्रितं तस्यकुक्षिगतादोषाः सर्वेनश्यंतितत्क्षणात् ॥ २५ ॥ यद्वृंदावनमासाद्यपंगुः खंजोपिवाज
नः स्तोत्रेणानेनयः कुर्यात्प्रदक्षिणनमस्कृती सजंघालुर्भवेदेवगुरुराजप्रसादतः ॥ २६ ॥ सोमसूर्योपरा
गेचपुष्यार्कादिसमागमे योनुत्तममिदंस्तोत्र मष्टोत्तरशतं जपेत् भूतप्रेतपिशाचादिपीडातस्यनजायते ॥२७॥
एतत्स्तोत्रंसमुच्चार्यगुरोर्वृंदावनांतिके दीपसंयोजनाज्ज्ञानं पुत्रलाभोभवेद्ध्रुवं ॥ २८ ॥ परवादिजयोदि
व्यज्ञानभक्त्यादिवर्धनं सर्वाभीष्टप्रवृद्धिःस्यान्नात्रकार्याविचारणा ॥ २९ ॥ राजचोरमहाव्याघ्रसर्पनक्रादि
पीडनं नजायतेस्यस्तोत्रस्यप्रभावान्नात्रसंशयः ॥ ३० ॥ योभक्त्यागुरुराघवेंद्रचरणद्वंद्वंस्मरन्यः पठेत्स्तो
त्रंदिव्यमिदंसदानहिभवेत्तस्यासुखंकिंचन किंत्विष्टार्थसमृद्धिरेवकमलानाथप्रसादोदयात्कीर्तिर्दिग्विदिताविभ
भूतिरतुलासाक्षीहयास्योत्रहि ॥ ३१ ॥ इतिश्रीराघवेंद्रार्यगुरुराजप्रसादतः कृतंस्तोत्रमिदंपुण्यंश्रीमद्भिरप्प
णाभिधैः ॥ ३२ ॥ मू० स० ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

इदं पुस्तकं बेळगांवाख्यपुर्यां मध्वशास्त्रं संपन्न भुक्केबागोपाव्हयैः बाळकृष्णाचार्यात्मज गुराचार्यैः संशोध्य आबाजी रामचंद्र सावंताख्येन स्वकीय श्रीरामतत्व-प्रकाशिकाख्यांकनशा-लायां शके १८२० विलंबिनाम संवत्सरे अंकायित्वा प्रकटीकृतम् ।